शुभम्

॥ श्रीरामो विजयते ॥

# जगद्गुरु श्रीसच्चिदानन्दशिवाभिनव-नृसिंहभारतीविजयकाव्यम्

महोपदेशक

ब्रह्मश्री राजवल्लभशास्त्री

शुभम्

॥ श्रीरामो विजयते ॥

# JAGADGURU SRI SACCHIDANANDA SIVABHINAVA NRISIMHABARATHI VIJAYAKAVYA

WITH A FOREWORD BY

Diwan Bahadur T. R. RAMACHANDRA IYER Avl.,

(Advocate, Madras)

BY

Mahopadesaka S. RAJAVALLABHA SASTRIGAL

PRINTED AT

THE MADRAS LAW JOURNAL PRESS,

MYLAPORE, MADRAS.

1934.

ॐ

शुभम्

॥ श्रीरामो विजयते ॥

# जगद्गुरु श्रीसच्चिदानन्दशिवाभिनव-नृसिंहभारतीविजयकाव्यम्

महोपदेशक ब्रह्मश्री राजवल्लभशास्त्री



॥ श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनः ॥



श्रीं श्रृङ्गेरीजगद्गुरुसंस्थानम् ॥

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीण यमनियमासनप्राणायामप्रत्याहारध्यानधारणसमाध्यष्टांगयोगानुष्ठाननिष्ठतपश्चक्रवर्त्यनाद्यविच्छिन्नगुरुपरंपराप्राप्तषड्दर्शनस्थापनाचार्य व्याख्यानसिंहासनाधीश्वर सकलनिगमागमसारहृदयसांख्यत्रयप्रतिपादक वैदिकमार्गप्रवर्तक सर्वतन्त्रस्वतन्त्रादिराजधानी विद्यानगरमहाराजधानी कर्णाटकसिंहासनप्रतिष्ठापनाचार्य श्रीमद्राजाधिराजगुरुभूमण्डलाचार्य ऋश्यशृङ्गपुरवराधीश्वर तुङ्गभद्रातीरवासि श्रीमद्विद्याशंकरपादपद्माराधक श्रीजगद्गुरु

श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारती - स्वामिगुरुकरकमलसंजात श्रीजगद्गुरु शृङ्गेरी श्रीचन्द्रशेखरभारतीस्वामिभिः ॥

अस्मदत्यन्तप्रियशिष्यराजवल्लभशास्त्रिविषये श्रीमन्नारायणस्मरणपूर्वकाविरचिताशिषस्समुल्लसन्तुतराम् ।

सम्प्रति,

यद्भवद्भिरारचय्य श्रीमदाचार्यविजयकाव्यमादरादर्पितम्, तदापादचूडमवालोकि । काव्यमिदं गुर्वीं गुरुभक्तिमुत्पादयद्भिराचार्यमहिमानुवर्णनपरैः पद्यैराकीर्णं प्रेक्षणसमकालमेव प्रेक्षकाणामन्तःकरणमावर्जयतीति विश्वसिमः ।

आचार्यविजयोऽयमाचार्यपादोपजीविनां श्रद्धाभक्तिसन्धुक्षणेन महतीमुपकृतिमादद्यादित्याशास्यते ॥

भावसंवत्सरस्याधिकवैशाखकृष्णाष्टमी-
भानुवासरे शृङ्गगिरितः ।

॥ श्रीरामो विजयते ॥

## ॥ उपोद्घातः ॥

श्रीमताम् आस्तिकशिखामणीनां पुण्यकृतामधिवासभूतं भारतमिदं वर्षं, न केवलमादिराजभरताधिष्ठिततया, किं तु ज्ञाननिरततया च भारताभिधां द्वेधा बिभर्ति इति नेदं तिरोहितमस्मदीयचरितवेदयानाम् । इह च स्वीकृतावतारैः परावरज्ञैः परिपूतात्मभिः पुण्यपुरुषैः प्रवर्तितामभ्युदयनिःश्रेयसयोः सरणिमधिरूढाः परश्शतं धन्यात्मानो बहुविधां सिद्धिमविन्दन्तेति च पुराणेतिहासपरम्परया ज्ञातुमिमे वयं प्रभवामः ॥

आगमानामेव सर्वोपरि बलवत्तमं प्रामाण्यमभ्युपगम्य प्रववृते सनातनी पद्धतिरास्तिकानाम् । कालेन च प्रकृतिसर्गस्य गुणवैषम्यविचित्रतया, सुनिरूढमूलमप्यास्तिकमतं लोकायतबौद्धादिसिद्धान्ताभासैर्मलिनतामनीयतेव । अप्रतिष्ठिततर्कावलम्बिमतान्तरविदलनपूर्वकं श्रुतिशिरस्सिद्धान्तप्रतिपादनमन्तरेण दुष्परिहरशिथिलभावे भवति वैदिकमते,

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥"

इति प्रतिज्ञां निर्वोढुकाम इवाजनि षाड्गुण्यपरिपूर्णः परमात्मा जगद्गुरुश्रीशङ्करभगवत्पूज्यपादवपुषेति स्थाने भगवतः

कारुणिकताविलासः ॥

भगवत्पूज्यपादानां जन्मभूमिताभागधेयं केरलभूभागेनानेनालाभीति वचसामगोचरः कश्चिदुत्कर्षातिरेकः केरलदेशस्य । आबदरीक्षेत्रं विरचितविजयानां प्रतिष्ठापितमठतल्लजानां च भगवत्पूज्यपादानां श्रेष्ठतमश्रीधामनि श्रीशृङ्गगिरौ कियानप्यवर्तत प्रतिपत्तिविशेषः । शृङ्गगिरिमठगुरुपरम्परामण्डनभूतैरेव पुण्यश्लोकवरेण्यैः श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीपूज्यपादैः सुचिरात् स्मृतिपथतिरोहितस्यादिगुरुपुण्यावतारस्थानस्य कालटिदेशस्य पुनरुन्मीलनेन शाश्वतप्रतिष्ठापादनेन च विनेयलोकः सुतरामनुगृहीत इति हन्त भाग्यं भगवदनुग्रहभाजनस्य शृङ्गगिरिपीठस्य । यथैवादिशङ्कराचार्याणां पवित्रं चरित्रं काव्यात्मना निबबन्धुर्विद्यारण्ययतीन्द्रास्तथाभिनवनृसिंहभा रतीचरितमेते रचयामासुर्विपश्चितामपश्चिमा राजवल्लभशास्त्रिमहाशयाः । अत्र चाचार्याणां कालटिक्षेत्रनिर्मितिः प्राधान्येन तदीयं चरितं चानुषङ्गिकतया वर्णितमिति लब्धवर्णा विना प्रयासमवगच्छेयुः ॥

'कान्तासंमिततयोपदेशयुजे' इति काव्यप्रयोजनपरिगणनायां प्रस्तुवन्ति काव्यमीमांसकाः । अतिगहनामप्यौपनिषदरहस्यानां सदाचारसाराणां च सरसमधुरया सरण्या प्रतिपादनेनोपदेशरूपं परमं प्रयोजनमनेन काव्येन सुष्ठु संपादितमिति मामकोऽभिप्रायः । उच्चावचेषु काव्यविभागेष्विदं काव्यरत्नं शास्त्रकाव्यरूपस्यावान्तरविभागस्यान्तःपातमर्हतितराम् ।

'न नैपुणी सर्पति तर्कमात्र-
बुद्धेः पदस्यावगमेऽत्र किं तु। (द्वितियभागः, 2, 38.)
'येन भाति रविरिद्ध ओजसा'

इत्यादीनि पद्यान्युपष्टम्भकतया समुद्धर्तुं युक्तरूपाणि भासन्ते। सरसपदसंदर्भेण चारुतरालंकारसंपदा च भूम्ना भूषितं काव्यरत्नमेतत्। श्रीमदभिनवनृसिंहभारतीगुरुवराणामवतारप्रकरणस्थं श्लोकद्वयमेतदत्र निदर्शनभावमवलम्बते॥

'सुतेन लक्ष्मीरधिकं बभौ सती' (द्वितीयो भागः 4.)
'अनिङ्गमाना निहिताः प्रदीपिकाः' ( ,, 4.)

एवं प्रकरणान्तरेभ्योऽपि परश्शतमुदाहर्तुं शक्यन्त एव पद्यानि। क्वचित्तु विषयस्य गहनस्वभावतया नामधेयानां च वृत्ताननुगुणतया क्लिष्टप्रयोगा अप्यपरिहार्यतया स्वीकृता इतीदं गुणग्राहिणो मनीषिणो मर्षयेयुरिति मे प्रत्ययः॥

आस्तिक्येन गुरुभक्त्या चापादचूडमतिमात्रभासुरस्य काव्यस्यास्य क्वचित् काव्यगुणानामपौष्कल्यं विद्यमानमपि न गुरुभक्तानां रुचिं विहनिष्यति। विंशतिसंख्याकैर्नातिसंक्षेपविस्तरैः सर्गैरलंकृतस्यास्य महाकाव्यस्य भूयसा लक्षणानुसृतिमपि संपादयितुं क्षमन्ते प्रकरणाविरोधेन संयोजितानि नगरादिवर्णनानि। रसेषु च सर्वथा प्राथम्यं वहतो रसराजस्य शान्तस्यैवाङ्गितया निबन्धनमत्र व्यधायि। सर्वथा प्रतिपाद्यमहिम्ना

प्रतिपादनमधुरिम्णा चानुगृहीतं सत्काव्यं कृतवते शास्त्रिमहाशयाय चिरस्याधमर्णतां धारयेदास्तिकसमुदायः । अस्य महाकाव्यस्य सर्गसारसंग्रहोऽपि सहृदयोपकाराय समुपह्रियते ॥

काव्येऽस्मिन् प्रधाननायकभावेन यद्यपि श्रीमदभिनवनृसिंहभारतीगुरुवरा एव विराजन्ति, तदपि तदन्तेवासिभावपरिपूताः महीशूरपुरमहाराजः श्रीकृष्णराजः, स्यानन्दूरदेशाधिपः महामहिमा श्रीमूलकमहाराजः तत्सचिवः श्रीमाधवरायमहाशयः, श्रीरामचन्द्रार्य इत्यादयो महापुरुषाः पताकानायकपदवीं नीता इति तदीयान्यपि धर्मोत्तराणि कृत्यान्यत्र विस्तरेण वर्णितानि ॥

अस्य च ग्रन्थस्य गुणानुमोदनेन प्रकाशनोत्साहमुद्दीपितवन्तः साम्प्रतिकश्रीशृङ्गगिरिपीठालंकारभूतश्रीचन्द्रशेखरभरतीगुरुवरा महान्तमनुग्रहमेतत्स्वीकारेण प्रणेतरि प्रदर्शयन्ति । भावनामसंवत्सरस्यास्य गुरुजयन्तीमहोत्सवावसरे कालटिदेशं गतेन प्रणेत्रा भाग्यातिरेकात् सर्वमङ्गलशंसितया श्रीशारदाजगद्गुरुसंनिधौ स्वीकृत्य शिरसा धारितं श्रीचन्द्रशेखरभारतीगुरुवराणां महनीयं श्रीमुखमेतत्पुस्तकादौ प्रकाशितं च ॥

अस्य च महाकाव्यस्य प्रणेता श्रीराजवल्लभशास्त्रिमहाशयस्ताम्रपर्ण्युत्तरतीरविराजमाने पालमडे नामकाग्रहारे विख्यातयशसां श्रीभाष्यकर्तृभवस्वामिश्रीरत्नखेटदीक्षितराजचूडामणिदीक्षितानां पावनेऽन्वये लब्धजन्मा व्याकरणवेदान्तादिशास्त्रे सम्यगधीती भारतधर्ममहामण्डलासासादित महोपदेशकविरुदः सुष्ठु

विदित एव विद्वत्समुदायस्य । गुरुभक्तिभरितहृदयस्य शास्त्रि-
महाशयस्य पञ्चषवर्षानुवर्ती सम्यक् परिचयः पूर्वपुण्यपरमाणोः
फलतया मया समासादितः काव्यस्यास्योपोद्घातलेखनभाग्यं
मह्यमुपानयदिति नितरां मोदते मेऽन्तरात्मा । वैदिकधर्मप्रचा-
रणैकतानमानसस्य शास्त्रिमहाशयस्य कृतिमिमां सम्यगनुवाच्य
प्रचारानुकूल्यमारचयन्तो धार्मिकाः सफलयेयुस्तदीयं सद्-
व्यवसायमिति मे प्रत्याशा ॥

पुस्तकस्यास्य प्रकाशने यदीयमेव महत्तरं साहाय्यमनन्यथा-
सिद्धतया कारणभावमवलम्बते तेषामास्तिकधुरीणानां महतां
वादान्यानाम् उपकारं प्रति शास्त्री सोऽयमनिर्यातनीयमाधमर्ण्यं
मन्मुखेन महाजनानवजिगमिषयतीति च प्रस्तुवन् काव्य-
रत्नमेतदास्तिकसमक्षमुपहारीकृत्यात्मनो धन्यतां संपाद-
यितुमभिलषति ॥

सहृदयसमुदायदासः

**अनन्तनारायणशास्त्री**

गोश्रीराजकीयाङ्गलकलाशालासंस्कृताध्यापकः

|| श्रीरामो विजयते ||

# FOREWORD.

SRI SANKARA, the founder or rather the expounder of the Advaita system of philosophy, is God Sankara himself. God Sankara as Dakshinamurty revealed to the Rishis of old, Parabrahmatattvam by his Chinmudra, his studied silence and his illuminating smile, and this had the effect of dispelling their doubts and conveying Brahmatattvam to them. God Sankara, an Ocean of mercy, feeling that the instruction then imparted, though suited to that time, ceased to have the same effect later on, decided to appear as Sri Sankara in this sinful age of Kali, to impart the same instruction in a manner suited to this age. The way was prepared for it by Vyasa Bhagawan, the great grandson of Vasishtha by his Brahmasutras and by Lord Sri Krishna by his Bhagavad Gita. The word of God, the Upanishads, proclaimed to the world from the very beginning the grand truth. Sri Sankara's Bhashyas on the above three *viz.*, Brahmasutras, Bhagavad Gita and the Upanishads have revealed Parabrahmatattvam to the world for all time to come.

Birth and Death are two undoubted facts true of all beings. What is birth? What is death? Let us take man. What is he? He is the body plus Jiva. He is said to be born when the body comes out of the womb with Jiva. When Jiva parts company with the body, it is called death. The question naturally arises whether with death the body alone ceases to exist or also Jiva and whether Jiva comes into existence only when the body gets life in

the mother's womb. That the human body has a beginning and an end is unquestionable. Is the same true of Jiva? The body is mortal, and no one mistakes a dead body for a man. Did Jiva enter the body, and did he leave it? That is to say, was Jiva in existence before the body, and does he exist after the body? If the answer is in the affirmative, the further question arises whether Jiva is mortal or immortal. If Jiva is immortal, then arises the question whether Jiva is one with God or independent of God and therefore one with limited vision. In other words, what is Jiva, how do you account for Jiva's enjoyment of pleasures and suffering of pains while in the human body, and what becomes of him when he is outside the human body and before he enters it again? These are the various questions which concern man. Sri Sankara has furnished us with suitable answers to the various questions in his memorable Bhashya and thus fulfilled the object of his Avatara.

Vedas consist of two parts, the Karmakanda and the Jnanakanda. The Karmakanda enjoins the performance of sacrificial rites such as Yajnas, while the Jnanakanda enjoins the renunciation of Karma. The one is a stepping stone to the other. The performance of Yajnas involves animal-sacrifice. Lord Buddha inculcated the doctrine of Ahimsa or abstention from inflicting pain of any sort and preached that Ahimsa was the highest Dharma. The performance of Yagas was very common among the orthodox Dvijas of old. Lord Buddha denied the authority of the Vedas and even the existence of God. His teachings found favour with many persons in India, and some of the eminent emperors of India were Buddhists. The result was that Buddhism gained ground and Hinduism was at a low ebb. It was about this time that Sri Sankara came to our rescue. He re-established the authority of the Vedas which should have been lost to us

for ever but for him. There were internal and external enemies to Advaitism. Internal enemies are those who, admitting the authority of the Vedas, advocate dualism or otherwise question Sankara's doctrines. He condemned the Nastika Darsanas and upheld portions of the Astika Shad Darsanas. He advocated Sanyasam or renunciation of Karma and established Advaitam.

In order that the benefit of his teachings may continue for all time, he took the precaution of founding four mutts and commanded a disciple of his to preside over each mutt. The Sringeri Mutt is one such mutt, and Sureswara was the first direct disciple of Sri Sankara who presided over the same. The heads of this mutt have all along continued to impart instruction to their numerous disciples on Sankara's works with strict adherence to his views. Vidyasankara was one such head, an outstanding personality and a Yogin of remarkable psychic powers, and it is under his seal that the affairs of the mutt are carried on to the present day. He was followed by Sri Bharati Tirtha, and then came Vidyaranya Swami whose invaluable services to the Hindu community are well-known to all. After his time Sri Ramanuja and Sri Madhvacharya, while admitting the authority of the Vedas questioned the soundness of Sankara's doctrines. They were both Dvaitins, and they had numerous disciples Further inroads on Advaitism were brought about by various causes, one important cause being the spread of English education which has done not a little to undermine Hindu religion. Swami Dayanada Saraswati by his interpretation of the Vedas which is diametrically opposed to the orthodox view founded a new religion called Arya Samajam. The Brahmos are another class of Hindus who question the orthodox views. The head-quarters of the Theosophical Society were removed to Adyar about half a century ago. The situation thus

changed from what it was before. Dharma was on the decline, and Adharma was in the ascendant. As Lord Sri Krishna has proclaimed in the Bhagavad Gita, the Lord came of himself as the head of the Sringeri Mutt in the person of Sri Nrisimha Bharati Swamigal. I have heard it said that he is a re-incarnation of the great Sankara himself. I had the privilege of meeting that great teacher on several occasions and of receiving his blessings. His Highness, the late Ex-Maharajah of Cochin was a great Sanskrit scholar and was respected by Pandits for his remarkable learning. He met Nrisimha Bharati Swamigal at Kaladi and spent about three hours in the Swami's company. I subsequently met the Ex-Maharajah and asked him for his opinion about the Swamigal. He told me that he was an inexhaustible storehouse of useful knowledge and the knowledge he possessed was not such as could be acquired in a life-time.

Brahmasri Rajavallabha Sastrigal of Tinnevelly, an erudite pandit well-versed in the Sastras, has written the life of this great hero in the form of a Mahakavya consisting of two parts of ten sargas each, the first part dealing with the earlier history of His Holiness down to the Kumbhabhishekam at Kaladi, and the second part dealing with his subsequent history. Mr. Sastrigal was a devout disciple of the Swamigal and had the benefit of his teachings and opportunities of knowing him intimately. He is also the author of several other works. Of these his Sivaratri Vichara, Manahprasada and Stavastabakam have already seen the light of print, and there are several others yet awaiting publication. He is a descendant of Ratnakheta Dikshita whose line has always been noted for remarkable achievements in the field of literature. For further details about the author, the reader is referred to the Introduction written by Mr. R. Krishnaswamy

Iyer, M.A, B.L., to the Stavastabaka published by the author.

Sri Nrisimha Bharati Swami followed closely on the footsteps of Sri Sankara, and in the course of his tours through the presidency he took care to impress on the audience the inportance of the Vedas and the danger of doubting their authority. The Swamigal's vast learning, superior intelligence, boundless wisdom, uncommon kindness and above all his winning manners attracted very large audience wherever he went. The disciples had implicit confidence in his teachings, and the reform which His Holiness was able to effect is such as to earn the lasting gratitude of the thousands who came under his beneficent influence. Mr. Sastriar has in lucid language recounted the various things that happened during the Swamigal's tours at various places, and it is unnecessary for me to mention them here. The rich and the poor, the young and the old received equal attention from the Swamigal. The poor were the object of his bounty wherever he went. Sir Seshadri Iyer and Mr. V. P. Madhava Rao, the late A. Ramachandra Iyer and C. R. Pattabirama Iyer were among his disciples. Prominent educated people in all districts paid homage to him. Kaladi, the birthplace of Sankara is now a place of pilgrimage solely through the efforts of this great Swamigal. The idea of building a temple for Sri Sankara and a Saradalaya at Kaladi occurred to him and him alone. Royal families of Mysore, Travancore and Cochin paid homage to him.

The Swamigal was responsible for the founding of the various schools for the study of Sastras in different parts of the Presidency. The Chamarajendra Sanskrit College, Mysore is also due to the suggestion of His Holiness. The celebration of Sankara Jayanti was first begun by the late Swamigal, and I went to Kaladi on two or three

occasions under the Swamigal's orders to celebrate it there with the help of the late Srinivasa Sastrigal of Nadukaveri, a pandit of eminence. Sankara Jayanti is now celebrated throughout the presidency, and Sankara's name has become a household-word.

I ought not to close this foreword of mine without making prominent mention of the Holy Saint who presides over the Mutt just now. The Sankara Matham at Bangalore was founded by the late Swamigal, and a Sanskrit College is located therein which is maintained by the Mutt. His Holiness Sri Chandrasekhara Bharati Swamigal, the present head of the Mutt, received his education in this institution. He was an ideal pupil, and I say this on the testimony of his teachers Brahmasri Virupaksha Sastrigal (now the head of a mutt), Brahmasri Subrahmanya Sastrigal and Brahmasri Vaidyanatha Sastrigal, all eminent pandits. When I met them at the Installation of the present head of the mutt, they spoke to me in glowing terms of the superior intelligence, admirable modesty and other remarkable qualities of their pupil. The late Swamigal has laid us under a deep debt of gratitude by the choice of a successor whose erudition, wisdom and Vairagya command the highest respect from his disciples. He who was an ideal pupil is now an ideal teacher. I am speaking from personal experience, having heard some of his learned lectures. On the day of the Installation he made an eloquent speech in Sanskrit, and the fluency and ease with which he spoke are inimitable. He is a Paramahamsa by pre-eminence. Although the head of a rich mutt, the wealth and influence of the mutt do not count in his estimation. During his last tour I had the good fortune to do Puja to him at my house in Mrityunjayapuram, Trichur. In the course of a lecture then delivered, he explained the meaning of the word Mrityunjaya. He observed Mrityunjaya ordinarily

means one who has conquered death. The word Mrityu must be understood, he said, to mean Pramada or Delusion and quoted the memorable passage from Sanatsujatiyam— प्रमादं वै मृत्युमहं ब्रवीमि Death, therefore, is the result of the Delusion or the mistaken notion that body is Atman. The present Sanskrit College at Kaladi owes its existence to the present Swamigal.

*20th September*, 1934.<br>*Mylapore, Madras.* T. R. RAMACHANDRA IYER.

॥ श्रीरामो विजयते ॥

## ॥ उपहारपत्रम् ॥

—— :o: ——

श्रीसद्विद्याभवनभुवनाचार्यपादारविन्दे
    दृष्टादृष्टश्रुतचिरसुखाधायिधर्मैककन्दे ।
श्रद्धापूतो बहुनतिततिभ्राजिपद्योपहारो
    भावोऽनर्घो मणिगण इवार्धीयते भक्तिसारः ॥ १

अत्यानन्दाकरगुरुवरस्वागतं सुप्रभातं
    गुर्वध्यक्षागमनममलं मङ्गलं रत्नजालम् ।
सत्पुत्रार्तिं भवतिरुजाहारिपीयूषवर्षं
    भूकल्पद्रुं मनसि जनता मन्यते स्वानुरूपम् ॥ २

शिष्याः शिष्टा मधुरमधुरं देशिकेन्द्रोपदेशं
    लब्ध्वा धर्माचरणमतयो लिप्सितं स्वं लभन्ते ।
दृष्टेऽप्यर्थे विशयविवशाः संश्रयन्ते सहायं
    किं वा दृष्टे निगमवचनाभ्यूहितेष्टे गुरुं त्वाम् ॥ ३

देवः साम्बो हिमकरकलामौलिरानन्दमूर्ति-
    र्हेरम्बोऽम्बाकुचभृतसुधातुन्दिलो रत्नगर्भः ।
वाचां देवी सरसिजकारा शारदा शारदाभ्र-
    च्छाया चार्यक्षितिपजनता श्रेयसे पूज्यतेऽम्बा ॥ ४

वाचां देव्या भवुकभवनं रत्नसिंहासनं त्वम्
अध्यासीनः शमदमधनो निर्विकल्पे समाधौ ।
स्वस्थस्तिष्ठन्नपि सुखघने श्रौतमार्गावनेच्छु-
र्जागर्ष्यात्मप्रवणमनसामेतदेव स्वकार्यम् ॥ ५

श्रीशृङ्गाद्रिर्हरति भवजं तापमीशेन्दुशीत-
स्तुङ्गा धेनुर्वितरति पयो मातृदुग्धानपेक्षम् ।
ज्ञानं मूल्येतरदभिमतं बोधयन्नास्ति देशो
यत्रात्मज्ञो निवसति यमी तत्र किं नास्ति तत्त्वम् ॥ ६

युक्ता देवा वचनकुतुकाः संगृहीताधिकारा
योगक्षेमे विहितरतयः सर्ववाञ्छासमृद्ध्यै ।
संनह्यन्ति श्रुतिपथरवे ब्रह्मविद्यायुताना-
मात्मानस्ते सुरपतिमुखा भावनायामभिन्नाः ॥ ७

काले तिष्येऽप्यभिमततमां साधुभिः क्षुण्णपूर्वां
श्रुत्यादिष्टां स्थिरयितुमना ब्रह्मविद्यामपि त्वम् ।
सत्संकल्पो जनततिमहाभाग्यतोऽद्वैतविद्या-
चार्येन्द्रेण प्रतिकृतिजुषा जैत्रयात्रां तनोषि ॥ ८

देया दीक्षा भवति नियतं द्वादशाब्द्यन्तराले
श्रद्धावद्भ्यः कुतुकिहृदयान्तेवसद्भ्यः श्रियेति ।
प्रत्यग्दृष्टिप्रवणरसिकोऽप्याहृताशाविहारः
पूतं तन्वन् भुवनमखिलं राजसे राजयोगिन् ॥ ९

पूर्वाचार्यो निगमपदवीस्थापनायावतीर्णः
पूर्णातीरे मलयमहितोऽत्यकायां ततः सः ।
तस्मिन् देशे त्रिभुवनगुरुः संप्रतिष्ठापनीयः
श्रौतैर्मार्गैः सममिति गुरो मोदयात्रां तनोषि ॥ १०

लोपामुद्राघटभवमुनिज्योतिरच्छोदराज-
त्ताम्राह्लादिन्यमृतलहरीमण्डितं पापनाशम् ।
चातुर्मास्यव्रतविरचनासक्तचित्तो यतीन्द्रः
सार्थं तन्वन्नमितकरुणापूरमस्रावयस्त्वम् ॥ ११

चित्तस्वच्छादमृतशिशिराद्बाणतीर्थाच्चरिष्णु-
ग्रामान् घुष्टाञ्छ्रुतिभिरभितोऽलङ्करिष्णुर्द्विजाग्र्यैः ।
प्राप्ता भाग्याद्बहुजनिकृताद्देशिकद्वादशात्मा
नष्टो मोहः स्थिरविकसितं स्वान्तपद्मं जनानाम् ॥ १२

आचार्यस्य प्रथितभगवत्पादनाम्नो दयालो-
र्विद्यासीम्नो विततनिगमव्याकृतेर्माधवस्य ।
विद्यातीर्थप्रमुखयमिनां दर्शनं साधु लब्धं
यत् सर्वस्त्वं लससि सततं भावयंस्तान् समस्तान् ॥ १३

धन्याः पाण्ड्या यदखिलगुरोः पादपाथोजरागा-
क्रान्ता रागापहृतहृदः प्रोत्सुकाश्चार्हणायाम् ।
अद्यावाप्तान्यखिलसवनप्राप्यभद्राणि तेजो
ब्राह्मं लब्धं हृदयतिमिरापोहमानन्दसान्द्रम् ॥ १४

B

आशृङ्गाद्रिप्रथमदिवसानन्यभावप्रतीक्ष्या-
मेतद्देशोऽप्यमितसुकृताद्देशिकेन्द्रक्रमाप्तिम् ।
लब्ध्वा सेवां रचयितुमनाश्चक्रवर्त्याद्यसाध्या-
मास्ते स्वीकुर्वनुपधिकृता शस्यतेऽर्चा प्रकृष्टा ॥ १५

आर्द्रो भावः कलयति गुरोः संस्तुतान् सर्वजन्तून्
द्राक्षावीक्षा रचयतितमां सर्वसौभाग्यजुष्टान् ।
वक्त्राम्भोजं नयनमधुपं कर्षति प्रेक्षितॄणां
शान्ताहन्ताकृतिरपि तनोत्याश्रवत्वं समेषाम् ॥ १६

तत्तद्वाञ्छासदृशमसमं मन्त्रजातं विभूत्या
साकं सद्यः फलमुपदिशन्मोदचञ्चत्कटाक्षः ।
चातुर्मासीं क्षणमिव चरन्नावरात्रं महं त्वं
पूर्वं पूर्णं फलमुपनयन्नातनोष्यस्मदिष्टम् ॥ १७

नेत्राब्जान्तप्रसरदमृतासारपूर्णाः सरस्यः
सर्वं गेहं हसितसमयोद्भूतकल्याणपूर्णम् ।
स्मेरालोकाल्लघु लघु गतं कामदोषादिजालं
सर्वं सूते शुभमविकलं प्रत्यगात्मज्ञसङ्गः ॥ १८

स्वाराज्याख्यानवनवसुधाकूपराजन्निपाना-
कारात् पात्रान्नवनवकृपासारकल्पान् जनेभ्यः ।
श्रेयोराशीनिव यतिपते चन्द्रमौलीशशीर्ष-
भ्राजद्गङ्गाजलमधुकणान् स्पर्शयन् भासि शान्तः ॥ १९

प्रत्यग्ज्योतिर्मयमिव गुरुं रङ्गमध्ये चरन्तं
चित्रन्यस्तामिव जनततिं वीक्षणाद्भासयन्तम् ।
आचार्येन्दुं करवरकृतां लालनां चन्द्रमौले-
र्नालंबुद्धिर्भवति जननीं पश्यतां शारदां च ॥ २०

संस्थाप्यत्राप्यखिलफलदं शङ्कराचार्यबिम्बं
शिष्या नेयाः सुखखनिकलोत्तंसवेदान्तविद्याम् ।
को वा नेता भुवनगुरुतः कर्मणेऽस्मै समर्थः
सूर्यो ह्येकः प्रभवति जगद्भासनायानिशोत्थः ॥ २१

वीणावेणुस्वरझरभृते नावरात्रे महेऽस्मिन्
सम्पत्पूर्णा प्रतिदिननवा शालिवाटीपुरीयम् ।
राकाचन्द्रप्रतिमभगवत्पादवक्त्रामलाभा-
लाभादिन्धे विगलितदिवारात्रिभेदास्तभेदा ॥ २२

स्वामिन् ब्रह्मन् सकलभुवने श्रौतधर्मोपदेष्टृ-
क्षोणीपालप्रकृतिसुलभं मन्तुजातं विषह्य ।
आशीर्वादैः शुभततिपदैः क्षीरधारासमान-
ब्रह्मानन्दप्रभवहसितालोकनाद्रैरवास्मान् ॥ २३

भूर्तो धर्मो हृदयमुकुरस्वच्छतापादको वा
प्रत्यग्ज्योतिर्मणिखनिसदालोकसिद्धाञ्जनं वा ।
भाग्यं शुद्धं निरवधि सुखं चैहिकामुष्मिकं वा
श्रेयःप्रेयःपदपदयुगो राजते राजयोगी ॥ २४

विद्यारामं विदितनिगमप्राप्तमायाविरामं
  स्वात्मारामं सततविकसच्चित्तमप्याप्तकामम् ।
शिष्यस्तोमानवमसुकृतप्राप्तमोदाब्धिसोमं
  वन्देऽकामं गुरुपरिवृढं ब्रह्मविद्याभिरामम् ॥ २५

ज्ञानं ज्योतिर्वितरति गुरौ भाति नित्यप्रकाशे
  सूते मुक्ताफलमुदधिना सङ्गता ताम्रपर्णी ।
सौम्या पृथ्वी फलति नितरामीतिबाधाविहीना
  वर्षः सौम्यः स्वयमनुगुणो राजतेऽन्वर्थनामा ॥ २६

दत्तां लक्ष्मीं करकमलगाद्देशिकस्यामलश्रीः
  सूतां विद्यां मुखसरसिजोद्भासिनी शारदाच्छा ।
आस्तामम्बाहृदयकमलोल्लासिनी ज्ञानशक्त्यै
  धत्तां शुद्धं पदसरसिजं मङ्गलं सर्वदाप्तम् ॥ २७

———:o:———

|| श्रीरामो विजयते ||

# || धर्मपद्धतिः ||

---

श्रीरस्माभिः सकलशुभदा प्रार्थ्यते सौख्यहेतोः
सा च स्वास्थ्याद्भवति नितरां तच्च लोभादिहानात् ।
तच्च स्वे स्वे पथि विचरणात्तच्च देवप्रसादा-
त्तस्मादस्याः पतिमभिमतं श्रीनिवासं प्रणौमि || १

इष्टं मे स्यादहितमिह मा भूदितीच्छन्ति सर्वे
तेषां त्वेतद्विशदनिपुणा धारणा नास्ति बुद्धेः ।
यत्संमग्ना विषयजलधाविन्द्रियाबध्यमानाः
पश्वादिभ्यो विगलितभिदा मानवाः सन्ति मुग्धाः || २

तस्माच्छास्त्रं हितमतियुतैर्मानवैर्भव्यहेतो-
र्दृष्टादृष्टप्रमितभवुका दर्शनैकान्तसेव्यम् ।
संसेव्यं यन्मिहिरसदृशं दुर्निरीक्ष्यं खलानां
घूकान्धानां प्रभवति सतां श्रेयसां लोकनाय || ३

शास्त्रं कर्म प्रथयति सुखस्यापि दुःखस्य हेतुं
प्रीत्या माता पितृवदनिशं ग्राह्यमग्राह्यमित्थम् ।
प्रत्यक्षादिप्रमितिषु परं त्यक्तबाधं प्रमाणं
धीमद्भिस्तच्छरणमुचितं सर्वदा सेवनीयम् || ४

रागद्वेषौ सहसमुदिताविन्द्रियार्थावबद्धौ
त्यक्त्वा शास्त्राण्यभिमततमान्याश्रयन्ते मनुष्याः ।
नो चेत् स्वेच्छाचरणनिपुणान् दण्डयेत् सर्वशास्ता
नाज्ञानं स्याच्छरणमुचितं नीतिरेषा हि लोके ॥ ५

चातुर्वर्ण्यं निखिलशुभदं चातुराश्रम्यमीशः
सृष्ट्वा धर्मान् व्यतनुततमामार्यभूमौ समस्तान् ।
तत्तद्योग्यानिति सुमधुरं सम्पदे शास्ति शास्त्रं
प्राज्ञानां तद्भवति हि चिरं निर्विवादं प्रमाणम् ॥ ६

श्रेयःप्रेयोवितरणचणान् धर्मपूगान् प्रदर्श्य
स्वाज्ञारूपां निगमभणितिं तत्पतिं चादरेण ।
श्रीमातास्मानवति कृपयेत्याजगत्सृष्टिधीरा
आर्या धर्मे पथि च नितरां क्लेशहीनाश्चरन्ति ॥ ७

मध्ये मध्ये सुकृतसरणिर्नास्तिकैरर्थकाम-
प्रज्ञैः शास्त्राध्ययनविमुखैः कण्टकैः प्रावृतापि ।
श्रीव्यासाद्यैः पुनरपि सतां न्यायभास्वत्प्रदीपा
सञ्चारार्हा व्यरचि मृदुला स्वेष्टलाभाय पुष्टा ॥ ८

सत्यप्येवं कलियुगवशाद्ब्राह्मणाद्याः स्वधर्मे
शास्त्रालम्बे शिथिलधिषणाः स्थातुमुच्चे विहस्ताः ।
धर्माभासे विषमफलदे गर्तकल्पे पतन्ति
क्षीणालोका इव विसदृशैर्नीयमाना दुराशैः ॥ ९

आम्नायानामकृतकगिरां कल्पितत्वं ब्रुवाणाः
स्वैरं वर्णाश्रमविरचनां दूषयन्तः पुराणीम् ।
धीमत्क्षुण्णे पथि विचरतो मोहयन्तो जनौघान्
केचिन्मान्याभवितुमनसः संत्यजन्ति स्वधर्मान् ॥ १०

श्रौते काले चरितमितरत्स्मार्तमन्यन्नवीनं
तस्मात् प्रौढापरिणयविधिः पश्चिमद्वीपयात्रा ।
सग्भिः साकं सकलमनुजैरेवमन्येऽपि धर्माः
सन्तीत्याहुर्नवपथरता ब्राह्मणा अप्यनेके ॥ ११

प्राज्ञंमन्याः कतिचनमतं भिन्नमाचारमार्गा-
दस्माकं तद्भवतु किमतो जातिभेदप्रयुक्तात् ।
धर्मात् क्लिष्टादिति मृदुजनान् स्वस्वमार्गप्रविष्टान्
अन्धा अन्धानिव लघु हठात् पातयन्त्यन्धकूपे ॥ १२

वंशे शुद्धे सुकृतवशतो लब्धजन्मान एते
कस्मात्तेषां भवति मलिना धीः सदाचारदृष्टौ ।
एते दूरव्यवहितधियः संगतेः पण्डितानां
मत्यः सङ्गो भवति हि सतां सर्वसम्पन्निदानम् ॥ १३

एते शोच्या उत नृपतिभिर्दण्डनीयाः प्रवृत्ताः
सेतोर्भेदे श्रुतिभणितिभिः स्थापितस्याद्भुतस्य ।
आहो बोध्या मधुमयवचोभङ्गिभिः सर्वथा ते
मार्गं नेयाः परमकृपया श्रीमता दैवतेन ॥ १४

श्रौतः स्मार्तो लसतु शुभदो धर्मपूगः पुराणो
येनान्वर्था वसु वसुमती संप्रसूते यथेष्टम् ।
चातुर्वर्ण्यं भजति जनता यत्र सम्यङ्निषण्णा
यस्मात् स्वास्थ्यं सुखघनमनायाससाध्यं समस्ति ॥१५

पुण्यात् पूर्वादधिकृतवपुर्धर्मकृत्येषु लब्धं
मोहात् त्यक्त्वा मतिमपि नरा दुष्कृतेष्वर्पयन्ति ।
भूरि द्रव्यं बहुसुखसहं स्वार्जितं दुर्विदग्धा-
स्त्रीपानादाविव निरवधिक्लेशहेतौ वृथैव ॥ १६

क्षत्रक्षत्रं बलमतिमहद्दुर्बलस्यापि धर्मं
शास्त्रज्ञेयं चरतु जनता वृद्धिमभ्येतु शास्त्रम् ।
दैव्यां वाण्यां रतिरविरता बालकानामुदेतु
श्रद्धास्तिक्यं विनतिरपि परा चित्तशुद्ध्यै विभातु ॥१७

ग्रामा वेदाध्ययनमुखरा वह्नयः स्वाहुताज्या
ग्रन्थाः श्रोतॄन् कुतुकिहृदयान् बोधयन्तु स्वधर्मम् ।
वर्णाः स्वेषां चरितचरणं श्रेयसे चिन्तयन्तो
विप्रा वर्णाश्रमविधिमनुष्ठापयन्त्वन्यवर्णान् ॥ १८

मीमांसार्था निगमभणितेर्वास्तवार्थान् वदन्तः
छात्रांस्तुष्टान् समयवचसां तत्त्वमाबोधयन्तः ।
वेदान्तार्थश्रवणनिपुणा भिक्षवो ब्रह्मनिष्ठाः
सन्त्वीशस्य प्रथितकृपया मङ्गलायाचलाय ॥ १९

सर्वा ह्लादिन्यमृतरुचिरा श्रोत्रपेयाभिनादा
मन्दं मन्दं गमनचतुरा मान्यमाना लताभिः ।
पुष्पैर्यान्ती युवतिचरितं बोधयन्ती समुद्रं
मुक्तासारप्रसवमहिता चित्तशुद्धिं तनोतु ॥ २०

इन्धां वर्णाश्रमविधिसभा सच्चरित्रोपदेष्ट्री
धत्तां वीरो निरुपमदयो राघवो धर्मवृद्धिम् ।
आस्तां माता सकलजगतां कान्तिमत्यर्थसिद्ध्यै
सर्वश्रेष्ठा हृदयकमले संवसन्ती सदैव ॥ २१

श्रीविद्वांसः सहृदयधियः स्वगतं वो महद्भ्यः
सद्गृह्योऽयं भवदुपगमः शेवधिः सत्कलानाम् ।
शुद्धादर्शः सकलसमयद्योतितत्त्वावबोधे
भाग्याल्लब्धाश्चपरतरसमाकाङ्क्षितः श्रेयसेऽद्य ॥ २२

सत्कारार्हान् समयनिभृताद सत्पथालोकभूतान्
साधिष्ठान् वः समुपचरितुं केवलं स्वागतोक्त्या ।
संसिद्धास्ते शमदमपराः शास्त्रनिष्णातचित्ता
आतिथ्यं सत्प्रणयमधुरां वाचमेवोद्गृणन्ति ॥ २३

कश्चित्तत्त्वे प्रसितहृदया आगमार्थावबोधे
मीमांसार्थेष्ववहितधियः श्रीमतां शिष्यवर्गाः ।
कश्चिच्चाङ्गाध्याननिपुणाः साहितीसारनिष्ठाः
कश्चित् काव्येष्वमृतभणितिष्वादरेणोद्यताश्च ॥ २४

क्वाहं मन्दः कविकुलपथप्रेक्षणे पङ्गुपङ्गुः
क्व प्रेष्ठास्ते ध्वनिपथगतौ पुष्पकारोहशीलाः ।
भक्तिं यष्टिं गुरुचरणयोर्भाग्यलब्धां दधानो
गच्छंस्तस्मिन् पतनविवशो हास्यतां यामि यामि ॥ ५

वाल्मीकिं प्रणमामि रम्यकवितास्थानं पुराणं कविं
वागर्थोभयचिन्तनप्रवचने नूत्नं महादेशिकम् ।
सव्यं दक्षिणमीशितुः शिवमयं ध्यातुं जनानां मुनि-
र्योऽध्यक्षं महनीयरूपमदिशद्वागर्थरूपात्मकम् ॥ ६

कविं व्यासं नौमि श्रुतिपदतदर्थद्युतिपदं
मुनिं स्वात्मानन्दप्रचुररचनां स्वाद्यकविताम् ।
दिशन्तं वाग्देवीचरणकमलाराधनजुषां
गुरुं विद्यारूपं सरसकविताराज्यचतुरम् ॥ ७

रसं भावं नानास्वरसरचनां रीतिमुचितां
स्वभावप्रोद्भूतां निखिलजननीस्तन्यमधुराम् ।
पदार्थानां भूयो विनिमयविधिं चापि ददतां
कवीनामाद्यानां सुकृतमहतां नौमि चरणौ ॥ ८

या मोहयत्यभिनवैर्मृदुलैर्वचोभिः
सम्यङ्निवर्तयति बाह्यकलासु बुद्धिम् ।
कालं विशालमपि या त्रुटिकार्धतुल्यं
रामा नयत्यभिनवेव विशालनेत्रा ॥ ९

प्राणादिबन्धमतिमात्रकृतोपवास-
खेदं विनैव परमात्मसुखोपलब्ध्यै ।
यामाश्रयन्ति विबुधाः सुकृतेन योगं
संदर्भणे कृतधियो वचसां वचोभिः ॥ १०

तां देवतामनियमां वचसामसीमां
सीमामनेकजनिसिद्धमहाव्रतानाम् ।
सालङ्कृतिं सुविशदां सुपदां प्रसिद्धां
नौमि प्रकामशुभदां कवितामिधानाम् ॥ ११

सर्वेशानं हिमगिरिसुताभाग्यसर्वस्वभूतं
सर्वाचार्यं सकलफलदं चन्द्रलेखावतंसम् ।
सर्वाधारं निटिलनयनं वेदशीर्षैकगम्यं
शर्वं वन्दे परमपुरुषं सच्चिदानन्दमूर्तिम् ॥ १२

श्रीमान् खण्डो भुवि विजयते राजधानी प्रशस्ता
मुक्त्या भास्वत्परमपुरुषज्योतिषो भद्रदीपः ।
श्रुत्यावळ्या विधिसुमभृतः शाश्वतारामभूमि-
र्धर्मक्षेत्रं प्रथितफलदो भारतोऽयं प्रसिद्धः ॥ १३

गङ्गादीनां सुकृतसरितां पावनैः स्वच्छतोयै-
र्मातुर्दुग्धैरिव हितकरैः सन्ततं पोष्यमाणः ।
देवागारैः सुरमुनिमुखैर्निर्मितैर्दूरदृग्भिः
पूर्णोऽभीष्टप्रसृतसुमनःसन्निधानप्रसन्नैः ॥ १४

चातुर्वर्ण्यं निगमगदितं चातुराश्रम्यमस्मि-
श्चातुर्वर्ग्यश्रियमभिमतां संविभक्तं तनोति ।
चातुर्युग्ये स्वयमवतरञ्श्रीपतिर्धर्मसेतु-
श्चातुर्मार्ग्यं समधिकलयन् मण्डयत्येतमीशः ॥ १५

सीमा यस्य क्षितिधरपतिः श्रीनिधेरुत्तरास्ते
दिक्ष्वन्यासूदधिरभितः श्रौतधर्मप्रसूतेः ।
यस्मिन् सर्वो मनुजनिवहः स्वेषु धर्मेषु सक्तः
पीयूषाशा अपि कुतुकिनो भुञ्जते यत्र हव्यम् ॥ १६

तस्मिन्नस्मिन् विगततिमिरे शास्त्रजालोक्तभाभि-
र्धारावन्तीप्रमुखनगरीराजिभी राजमाने ।
क्षुण्णात् पूर्वैर्द्विजमुखजना वर्त्मनो न व्यतीयु-
र्मार्गाद्भ्रंशो भवति हि तमस्याकुले मन्ददृष्टेः ॥ १७

ते पन्थानः सततसुगमा वेदभास्वत्प्रदीपा
अप्यामृष्टा विषतरुसमैर्दुर्विदग्धैरनेकैः ।
युक्त्याभासैर्विमतकलितैः कण्टकैर्विप्रकीर्णा-
श्चासंस्तस्मादजनि जनता भिन्नमार्गप्रसक्ता ॥ १८

स्यात्संछिन्नः क्षितिसुरकृतः सप्ततन्तुर्यदास्मात्
क्रान्ता देवा हुतवहमुखाः स्युर्यदा क्षुद्रताश्च ।
उत्तिष्ठेताप्यहितचरणं सम्भवेद्धर्महानिः
सर्वक्षेमप्रभुरवतरेद्दीतिरेषां तदेति ॥ १९

तिष्येऽप्यस्मिन्नशुभकलुषे शम्भुरानन्दपूर्णो
जन्मक्षेमप्रळयरचनोद्भावितस्वात्मशक्तिः ।
मार्गान् रम्यान् विरिरचयिषुः प्रार्थितः पद्मजाद्यै-
रार्याम्बायां शिवगुरुमुनेः केरळेषूदियाय ॥ २०

श्रीवैशाखे परमपुरुषः स्वोच्चपञ्चग्रहेऽसौ
श्रीपञ्चम्यां श्रुतिमयतनुः स्वास्थ्यदस्त्र्यदम्बकर्क्षे ।
श्रीमाञ्छम्भुः सकलभुवनक्षेमकांक्षी प्रजज्ञे
श्रीमातृश्रीनिचयभवनं शङ्कराचार्यनामा ॥ २१

स्तोमैः पूर्णः स्वयमुपगतैः पञ्चमेऽब्दे कलानां
ब्राह्मीं लक्ष्मीं करकमलगां मण्डयन् वर्णिराजः ।
मात्राज्ञातो महितमुपयन्नाश्रमं पश्चिमं स्वे
धाम्नि स्थित्वा तिमिरमधुनोदष्टमेऽब्दे मुनिः सः ॥ २२

शिष्यैर्धीरैर्मुनिभिरुचितैस्तोटकाद्यैः समेतो
विद्यालक्ष्मीविहृतिकुतुकैः सर्वतन्त्रस्वतन्त्रैः ।
षट्कर्मादीञ्श्रुतिपथसदाचारशीलान् वितन्वन्
क्षोणीपालं स्ववशमतनोच्छ्रीसुधन्वाभिधानम् ॥ २३

आसेतोराहिममयगिरेरुद्धरन् कण्टकौघान्
पार्श्वारूढान् कुमतिकलितान् शंकरो मार्गदर्शी ।
युक्त्या बद्धैर्निगमघटितैः शर्कराभैर्वचोभिः
श्रौतान् स्मार्तानधिकसुखदानध्वनः संवितेने ॥ २४

आचार्येन्द्रो निगमनळिको न्यायनाळीकगुम्भै-
रास्तिक्याद्रौ निहितचरणो मौनिनां चक्रवर्ती ।
अन्योन्यारीन् प्रमितिविकलान् द्रावयन् दुष्टवादान्
धूत्वा श्रौतीं सरणिमभितोऽस्थापयन्मार्गनेता ॥ २५

तस्या वृद्धिं रचयितुमनाः सर्वलोकानुकूलां
धर्माद्यर्थैरिव सह शुभैरागमैः स्वप्रमाणैः ।
शिष्टैः शिष्यैर्विजितकरणैर्बाहुकल्पैश्चतुर्भि-
र्योगी पीठीश्चतसृषु शिवा दिक्षु सोऽतिष्ठिपच्च ॥ २६

तास्वेकाद्या विहितवसतिः साधुमार्गान्वितानां
छायावृक्षैः सुमफलनतैर्नित्यनिर्मुक्ततापा ।
सङ्कूजद्भिः स्वकमिव यशो विष्किरैर्गापयन्ती
तुङ्गानीरैरमृतसरसै राजते पोष्यमाणा ॥ २७

यस्यास्तीरे वसति भगवांश्श्रीविभण्डात्मजातः
शान्ताजानिः प्रथितमहिमा शान्तिमानृष्यशृङ्गः ।
यन्नाम्न्यद्रावुरगनकुलं शोभते बद्धसख्यं
विद्युत्कान्तो जलदपटलो वर्षति प्राज्यमम्भः ॥ २८

तं शृङ्गाद्रिं विजयिभगवत्पादकीर्तेः पताका
सद्विद्यानां नियतवसतिश्चन्द्रिका भारतेन्दोः ।
नित्याध्यास्ते निगमसरणीवीरुदारामभूमि-
र्विद्याकारा विबुधविनुता वार्तिकाचार्यपीठी ॥ २

तस्यां पीठ्यां जयति विजयिश्रीगुरोः शङ्करस्य
ज्ञानाकारा सरसिजजनिप्रेयसी लोकमाता ।
हस्तैः पद्मं सितमपि शुकं पुस्तकं चाक्षमालां
संबिभ्राणा शशधरमुखी शारदा चन्द्रचूडा ॥ ३०

प्राहुः पूर्वे यदधिमहि क्षेत्रमार्याः पवित्रं
प्रत्यासन्नं मणिगणनिधेः पश्चिमाब्धेः प्रशस्तम् ।
फुल्लाम्भोजा वहति समया यद्वराहाद्रिजाता
तुङ्गा बल्लीवसनपिहिता स्वाद्यशुद्धोदपूर्णा ॥ ३१

या भद्रामप्यधिकसुभगां सागरं संयियासुं
तुष्ट्यादाय स्वयमभिमुखी कृष्णया सेव्यमाना ।
गत्वास्तेऽब्धिं निखिलतटिनीवल्लभं सेवमाना
गम्भीरा हि प्रियमनुगुणं तत्प्रियाभिः सहैति ॥ ३२

श्रीवाग्देवीनिटिलविलसद्रत्नभानुप्रभाभा
लक्ष्मीर्नित्या लसति धनुषः पौरुहूतस्य यत्र ।
अत्युत्तुङ्गस्तुहिनगिरिणा भूधरः शृङ्गनामा
रत्नाधारः शिवनिवसतिः स्पर्धते यत्र नित्यम् ॥ ३३

वाचां देवीं द्रुहिणगृहिणीं शारदां वादतुष्टां
विश्वाचार्यो भुवनहितकृच्छङ्करो धीरधीरः ।
निर्मायाद्यं विबुधविनुतं शारदापीठमुच्चं
यत्राद्वैतप्रचयगतये नित्यवासं ययाचे ॥ ३४

भेक्यां यत्र प्रसवसमयक्लेशसम्पीडिताङ्ग्यां
भानोस्तापं फणभृदहरच्छत्रयित्वा फणं स्वम् ।
इत्यैतिह्यं प्रचरति भृशं कोविदैर्गीयमानं
तेन स्वामी प्रथितमहिमा ह्यर्च्यते दर्दुरेशः ॥ ३५

तुङ्गां प्राचीगमननिपुणां यत्र कृत्वा यतीशो
मध्येतुङ्गापृथुवरशिलं चक्रराजं विलिख्य ।
आस्थाप्यास्मिन् मठमपि दृढं दक्षिणाम्नायपीठे
वाचां देव्या मलयजमयं निर्मिमे चापि बिम्बम् ॥ ३६

सप्तर्षीणां तपसि महतामृष्यशृङ्गः प्रणम्यः
शम्भुं नाम्ना मलहमखिलामर्त्यसंसेव्यमानम् ।
लिङ्गाकारं शशधरधरं प्रोच्चशैलस्थलस्थं
क्षेत्रे चित्रे नमति सततं यत्र वैभण्डकिः स्म ॥ ३७

कुण्डोध्नीगौर्गहनमखिलं सञ्चरन्ती प्रहृष्टा
जग्ध्वा शष्पं प्रतिदिनमिदं लिङ्गमानन्दपूर्णा ।
संसिञ्चन्ती मधुरधवळक्षीरधाराभिरर्षै-
र्गोष्ठं प्रागादिति किल बुधाः सङ्गिरन्तेऽत्र वाणीम् ॥ ३७

एतद्वृत्तं तदधिपतिना गोपवृद्धेन चोक्तं
श्रुत्वा राजा शिवपदरतो निर्मिमाणोऽथ गेहम् ।
शम्भोः पूजां स्वयमभिमतां कारयन् भक्तवन्द्यो
लेभे कीर्तिं जनिसफलतां चेति वृद्धा वदन्ति ॥ ३८

साम्बागारं गुरुरुपगतः सप्तविंशोऽत्र पीठे
विघ्नेशार्चाकुतुकिहृदयः सच्चिदानन्दयोगी ।
ग्रावस्तम्भे गणपतिवपुश्चात्र हारिद्रमाधा-
द्विघ्नेशोऽस्मात् समभवदिहेत्यामनन्ति प्रवीणाः ॥ ३९

विख्यातस्य त्रिभुवनगुरोः शङ्करस्येह वाक्यात्
प्राच्यां नित्यं सुकृतमवतो भैरवस्याप्यवाच्याम् ।
दुर्गाम्बायाः पवनतनयस्यापि देव्याः प्रतीच्यां
काल्या मातुर्भृशमपचितिर्वर्तते चाप्युदीच्याम् ॥ ४०

षण्णां कृत्वा श्रुतिबलयुते सन्मतानां प्रतिष्ठा-
माकाश्मीरान्निरवधि शमाकन्यकाक्षेत्रभूमि ।
ख्यात्याभिख्यां भगवति गुरौ योगरूढां दधाने
शिष्यैः सार्कं भुवनजठरे कृत्यमन्यन्न चासीत् ॥ ४१

आश्रीजानेर्ज्वलति दशमे शङ्करे देशिकेशे
तच्छिष्येषु श्रुतिपथसदाचारनिष्ठापरेषु ।
तन्वानायां नियतवसतिं शुद्धशृङ्गाद्रिदेशे
देव्यामासीद्भुवनमखिलं शारदायां प्रसन्नम् ॥ ४२

नूत्नाचार्याः प्रतननिहितां धर्मरक्षाधुरां स्वां
याथापूर्व्यं प्रणिधिपरमा निर्वहन्ति स्म गुर्वीम् ।
तत्तत्कालेष्ववहितधियो क्षेमतत्यै जनानां
सङ्कल्पो हि प्रभवति सतां सर्वकार्येषु सत्यः ॥ ४३

निष्प्रत्यूहं कलुषरहितं चाश्रमेषूज्ज्वलेषु
श्रौते स्मार्ते विजितकरणैर्ब्राह्मणाद्यैः स्वधर्मे ।
श्रद्धावद्भिर्नियतसमयं चीयमाने समोदं
स्वस्थं सर्वं भुवनमभवत् सत्यसौहार्दसारम् ॥ ४४

छायावृक्षे त्रिभुवनगुरोरन्ववायेऽनपाये
संसारोष्मश्रमहतधियामध्वगानां शरण्ये ।
सन्न्यायार्द्रप्रसवसुरभौ ज्ञानभास्वत्फलाढ्ये
सर्वे शिष्याः फलमपि सुखं लेभिरे वाञ्छितं स्वम् ॥ ४५

दीपो भाति स्वयमभिमुखो निश्चलः प्रोज्ज्वलश्च
प्रख्यातोऽध्वा समतलयुतः साधुसञ्चारयुक्तः ।
लभ्यं रत्नं भवति च पुरो नित्यसन्तोषहेतु-
र्दृष्टा तच्च स्वयमिह जनो विन्दते युक्तमेतत् ॥ ४६

एवं तीर्थक्रममनुगता धर्मचर्यां चरन्तो
भाष्याद्यर्थप्रवचनपरा देशिकाः सम्बभूवुः ।
विद्यापूर्वो गुरुरुदभवच्छङ्करश्चाथ काले
पीठे तस्मिन्नमितमहिमा सिद्धिसंसेव्यमानः ॥ ४७

यस्याभूतां विबुधविनुतौ भारतीकृष्णतीर्थौ
विद्यारण्यो मुनिरिति च महायोगिनौ सर्ववन्द्यौ ।
विद्यामूर्ती विदितचरितौ तत्त्वबोधप्रवृत्तौ
हंसौ युक्तौ निगमवचनस्तोमसञ्चारशीलौ ॥ ४८

तिष्ठासुः स प्रयतकरणो योगपीठे महात्मा
कृत्वा तीरे शुचिमृदुतले दक्षिणासिंहशैले ।
शैलं बिम्बं शिवतनुमयं दर्शयंस्तत्र शिष्या-
नेवं देहो भवति च पुरेत्यब्रवीद्योगतश्च ॥ ४९

विद्यातीर्थो ह्युदगभिमुखस्तत्र सिद्धासनस्थः
सान्तेवासी भवति पुरत प्राग्विभागेऽब्जयोनिः ।
लक्ष्मीजानिः पितृदिशि तथा पञ्चवक्त्रः प्रतीच्या-
मूर्ध्वं लक्ष्मीनरहरिवपुर्लिङ्गमत्युच्चभागे ॥ ५०

चातुर्विद्येश्वरमतिशुभं तत्र निर्माप्य बिम्बं
गेहं चान्तर्विमलतलकं कारयित्वा न चैतत् ।
उद्घाट्येत प्रकृतिचपलैर्द्वादशाब्द्याः पुरस्ता-
दित्युक्त्वासौ परममहिमा तत्र सन्नन्युवास ॥ ५१

तत्रैतस्मिन् वसति महति श्रीगुरौ योगनिष्ठे
याते वर्षत्रितयसमये लङ्घिताज्ञास्तु शिष्याः ।
उद्घाट्यैतद्गृहमभिमुखा यावदीक्षाम्बभूवु-
स्तावल्लिङ्गं परमिह बभौ नान्यदाविर्बभूव ॥ ५२

पश्चाद्गेहं भृशमतिभिया सम्पिधाय प्रयाता-
स्ते तद्रात्रौ स च गुरुरथ प्राब्रवीत् कृष्णतीर्थम् ।
ईशस्याज्ञामनुसर कुरु प्राज्ञ लिङ्गं प्रशस्तं
देशेऽस्मिन्नित्यभिमुखगतः स्वप्न इत्यस्ति गाथा ॥ ५३

अन्तर्दृष्टिर्दहरहृदये राजमानं महान्तं
सर्वाधारं निरुपमसुखं ज्योतिराकाशमीशम् ।
साक्षात्कृत्य स्तिमितनयनो भारतीकृष्णतीर्थ-
स्तस्यादेशं स्रजमिव शिरस्यासजज्जातनिष्ठः ॥ ५४

तस्य च्छात्रो गुरुवचनपरः कृष्णतीर्थोऽथ योगी
तत्कालस्थं हरिहरनृपं स्वामिभक्ताग्रगण्यम् ।
देवागारं विजयनगराधीशमास्तिक्यनिष्ठं
तत्राधातुं समदिशदथ प्रेक्षणीयं विचित्रम् ॥ ५५

एतस्याज्ञां श्रियमिव गुरोर्मस्तकेऽसौ दधानः
प्रीतोऽत्यर्थं स च नरपतिः सर्वमान्यो वदान्यः ।
यावच्चक्रे पशुपतिगृहं भारतीकृष्णतीर्थ-
स्तावत्तेने सह परिगणैः शङ्करस्य प्रतिष्ठाम् ॥ ५६

स्वात्मज्योतिःशिवपरहृदस्तस्य योगप्रसिद्धिः
सर्वज्ञश्रीविबुधभगवद्भारतीकृष्णशक्तिः ।
अत्याश्चर्या विजयनगरक्ष्मापतिस्वच्छकीर्ति-
र्विद्यातीर्थालयविरचना भाति निःसीमशोभा ॥ ५७

ऐतिह्यज्ञाः क्रमपरिगतं साधु गायन्ति विज्ञा
विद्यातीर्थप्रयतचरितं सर्वदागोपबालम् ।
प्रावपत्यश्च स्फुटतममिदं प्रब्रुवन्त्येवमग्र्यं
किं दुःसाधं भवति भुवने योगिनां सिद्धिलक्ष्म्याः ॥ ५८

तत्रेक्ष्यन्ते दृषदि मनुजा जन्तवो देवताश्च
प्रादर्शोऽयं रुचिररचनः शिल्पिनां पाटवस्य ।
श्रीचक्राभं तमतिकुतुका यान्ति विद्यालयं ते
ये दुर्वासोरचितललितास्तोत्रपाठप्रवीणाः ॥ ५९

तन्मध्येऽन्तर्ललितघटनो द्वादशस्तम्भशोभी
प्रोच्चो रम्यो मृदुतलयुतस्त्रिप्रतीहारयुक्तः ।
भात्यत्यर्थच्छविनिवसतिर्मण्डपो यत्र भानोः
श्रीः स्थूणासु प्रसरति शुभा मास्सु राशिक्रमेण ॥ ६०

एवं विद्याशिववरगृहं भारतीकृष्णतीर्थौ
निर्माप्य श्रीहरिहरनृपेणार्हणायै समर्थान् ।
प्रागुत्सृष्टान्नियतफलदात् क्षेत्रभागाद्विशिष्टान्
क्षोणीभागान् प्रचुरफलदान् दापयामास भूयः ॥ ६१

तस्य प्राणस्तदनु सकलाम्नायसारो वपुष्मान्
विद्यारण्यो विबुधविनुतो विश्वधर्मावनाय ।
विद्यापीठं मनुमणिनिधिर्मण्डयामास सिद्धः
सर्वं स्थानं सदृशविबुधालङ्कृतं राजते हि ॥ ६२

श्रीविद्यायाः परमकृपया प्राप सिद्धीः स योगी
तत्सङ्गत्या हरिहरनृपोऽलब्धकाराधिराज्यम् ।
कर्णाटानां विजयनगरेऽन्वर्थनाम्नि प्रशस्तं
धीराः प्राहुर्भुवि हि सुरभिं सङ्गतिं सज्जनानाम् ॥ ६३

दाने ख्यातः पशुपतिसखः पाण्डुपुत्रश्च धर्मे
  विद्वद्रक्षानियमसरणौ भोजराजः स विद्वान् ।
ग्रामान् प्रादान्नियतफलदाञ्शारदाराधनार्थं
  साकं ग्रामैरमितफलदैर्यायजूकद्विजेभ्यः ॥ ६४

विद्यारण्यप्रथितकृपया तस्य हस्तं समीयु-
  र्देशाः श्रेष्ठं फलमपि ददुर्भूमिपाला इवान्ये ।
विद्यारण्यं शिवफलशिवाराधनासक्तचित्तं
  संख्यावन्तः सहजविनयाः श्रेयसे सम्प्रणेमुः ॥ ६५

यं सर्वज्ञं शममुखसमाध्यन्तिमष्टाङ्गयोगः
  सद्विद्याभिः स्वयमुपगतो निःसमं भूष्यतायै ।
आत्मेशानप्रवचनपरैर्दर्शनैः साकमन्यै-
  रङ्गैः षड्भिर्निगमसहितैः प्रेष्ठमाचार्यमाप ॥ ६६

यस्मै प्रेष्ठा परमसुखदारोचताध्यात्मनिष्ठा
  यः श्रेयोभ्योऽस्पृहयदनिशं छात्रवर्गस्य योगी ।
यत्पादाब्जापचितिकुतुकस्यालमन्यैः प्रयत्नै-
  र्यस्याशास्तिः सकलदुरितध्वस्तयेऽलम्बभूव ॥ ६७

विद्यारण्यो मुनिरभिनवः शङ्करो भाष्यकर्ता
  तन्त्राण्यन्यान्यपि कथयितुं सप्रपञ्चं सुबोधम् ।
अस्मिंल्लोके न हि स विषयः सर्वलोकोपकारी
  यं सर्वज्ञः स जितधिषणो निःसमं नाववर्णत् ॥ ६८

राजानो यं करधृतमणिश्रोणिहारोपहाराः
प्रेयःश्रेयःप्रचयहृदयाः साधकैः साकमन्यैः ।
नत्वा कामान् सुतधनमुखानैहिकानप्यवापुः
सद्यः सूते सहनिवसतिः सम्पदो योगिनां हि ॥ ६९

गार्हस्थ्ये यः स्ववशकरणो लब्धसर्वात्मभावो
श्रौतान् स्मार्तान् विधिवदखिलानाचरन्मुक्तसङ्गः ।
ईतीर्दैवीः सपदि शमयन् मानुषीरप्यमेयो
धीरस्तत्त्वप्रवचनपरः पारहंस्यं प्रपेदे ॥ ७०

यः श्रीविद्यानगरविलसद्भद्रसिंहासनस्थं
तन्वन् बुक्कं हरिहरयुतं भूषयन् मन्त्रितां च ।
आशासानो भुवनभवुकं शासदुर्वीं निरीतिं
कीर्तिं काष्ठाश्रवणपुटयोरर्पयामास भूषाम् ॥ ७१

आराध्याम्बां सकलफलदां वर्षयन् यः प्रवीणो
हेमस्तोमं नवनिधिसमं चन्द्रमौलिं सिषेवे ।
रम्यं हर्म्यं चतुरविलसद्गोपुरं निर्मिमाणः
स्वर्गस्थानामुचितसरणिं मातृकां कौशलस्य ॥ ७२

विद्यावंशे द्वितयमभवत् प्राप्तगार्हस्थ्यलक्ष्म्योः
पारिव्राज्यं तदनुचरतोर्मौनिनोः शास्त्रदृष्टम् ।
तत्त्वं लक्ष्यं समुपदिशतोरेतयोर्वार्तिकाना-
मेकः कर्ता सुमतिरपरो वेदभाष्यस्य कर्ता ॥ ७३

क्षोणीसत्ये सुकृतिनिलये ब्रह्मविद्याधिवासे
देशे रम्ये सदनमभितः शारदाया बुधानाम् ।
गेहैः पूर्णाः समुचितपथास्तुङ्गभद्रोपकण्ठं
विद्यारण्यो व्यतत नितरां वीथिकाः प्रेक्षणीयाः ॥ ७४

तस्यादेशादथ विधिहुताश्चाग्नयः सम्बभूवु-
र्विप्रैर्वेदाध्ययननिपुणैः श्रौतनिष्ठैः सुशीलैः ।
विद्याशाला विविधविषयेषूद्बभूवुर्विशाला-
श्छात्रास्वासन्नियमसहितास्तीर्थलब्धागमाश्च ॥ ७५

यः प्रत्यब्दं गणपतिसमाराधनं प्रौष्ठपद्यां
चन्द्रे तुर्यां गतवति कलां कल्पवित् कल्पयित्वा ।
साकं दृष्ट्वा सुरभिसमया शारदायाः समक्षं
पीठासीनः परिषदि बुधांश्छात्रबृन्देऽन्वयुङ्क्त ॥ ७६

तां तामन्यां परिविरचयन् मानसीं सृष्टिमीशः
श्रेयःस्थेम्ने सकलजगतां चक्रवर्ती यतीनाम् ।
शास्त्रैरन्यैः सममुपदिशन्नित्यमद्वैतविद्यां
शान्ताजानेर्गिरिपरिसरे स्वाश्रमं सोऽध्युवास ॥ ७७

सा च क्षोणिस्तदनु नगरी तत्र वस्वोकसारा
जज्ञे साकं कविगुरुसमैः कोविदै राजमाना ।
भूपालाद्यास्तदनु शुभदे नावरात्रादिकाले
नानारत्नाभरणनिवहं वार्षिकं चोपजह्रुः ॥ ७८

पीठ्यास्तस्या भृशमनुगुणः संबभूवाथ सौधः
श्वेतच्छत्रद्वयमपि शुभं पूर्णिमेन्दूपमानम् ।
तद्वद्रङ्गारससममभूच्चामरद्वन्दमेवं
सर्वं चिह्नं करिहयमुखं विश्वविख्यातमासीत् ॥ ७९

किञ्च ध्येया कनकखचिता शारदामूर्तिरासी-
न्नित्यं नित्यं महविरचनावाद्यघोषैर्जजृम्भे ।
भूपालादिव्यवहृतिकृते शङ्करस्यैव मुद्रा
विद्याद्यस्य श्रुतिमयतनोः पप्रथे सर्ववन्द्या ॥ ८०

तन्मुद्राङ्कं सकलमुचितं लौकिकं कर्मजातं
नानादेशस्थितनृपजनज्ञानकर्मोपयोग्यम् ।
विद्यास्थानीसदृशमभवत्तत्तदालोकनीयं
सर्वेश्चान्यो विशदमहिमा तद्गुरूपक्रमं हि ॥ ८१

विद्यारण्यो विबुधमघवा लब्धसन्न्यासधर्मा
विद्यतीर्थादमितमहिमा पञ्चपञ्चाशदब्दम् ।
वित्तस्तस्मिन् विजितविमतः श्रौतधर्मानपुष्य-
द्विद्यामूर्तिः स किल भगवान्नूतनः शङ्करो हि ॥ ८२

विप्रा वेदाध्ययनकुतुका यागनिष्ठा विधिज्ञाः
सायम्प्रातःसवनचरणासक्तचित्ता बभूवुः ।
वेदान्तार्थप्रवचनपरा मस्करीन्द्राश्च देशे
यत्कर्तव्यं तदखिलमभूच्छारदानुग्रहेण ॥ ८३

एवं तत्तद्गुरुकरसरोजातजातः परिव्रा-
ड्रीतीः सर्वाः सुखमनुसरन् सर्वविद्यास्वधीती ।
ध्यायन् देवान् मनुभिरखिलैर्निर्ब्रुवन् ब्रह्मविद्यां
कांश्चिद्देशान् जनशुभकृते पर्यटन् भूम्नि तस्थौ ॥ ८४

निष्प्रत्यूहं सति गुरुकुले श्रीयुतायां धरित्र्या-
मासीद्विप्रो निगमवदनो यूपचिह्नोऽग्रहारः ।
राजा धीमत्सचिवसहितः शासदुर्वीं नयज्ञः
शेषो वर्णस्तदभिवदनः स्वस्वधर्मे रतश्च ॥ ८५

यातेष्वेवं नियतनियमं केषुचिद्धायनेषु
कर्णाटानां महिसुरपुरी राजधानी बभूव ।
विद्यापीठी कमपि समयं पञ्चवट्यामुषित्वा
शृङ्गक्षेत्रं पुनरुपगता स्वास्थ्यमापोचितं स्वम् ॥ ८६

कालेऽन्यस्मिन्नभिनवगुरुः सच्चिदानन्दयोगी
राज्ञाहूतः सह विनयिना मन्त्रिणा पूर्णनाम्ना ।
स्वं माहात्म्यं निरुपममथाविष्करोति स्म चित्रं
दैवी सिद्धिः खलु सहभवा तत्र पीठे गुरूणाम् ॥ ८७

पीठी सैषा शमदमपरा रक्षिता लोकमात्रा
चूडाराजद्भपतिकलया शुद्धयाभीष्टदात्र्या ।
ज्वालामालाप्रतिभयमहाक्ष्वेळकण्ठस्थलेन
प्रख्यातेन त्रिपुरदहनेनापि संरक्षितास्ते ॥ ८८

आचार्याणां भुवनसुहृदामानुपूर्व्यं प्रशस्तं
योगक्षेमं प्रतिदिनमनुप्रापयच्छिष्यवर्गम् ।
शुद्धाद्वैतं यतिकुलमनुश्रावयद्ब्रह्मनिष्ठं
रेजे विद्याप्रवचनपरं सन्निधानेऽम्बिकायाः ॥ ८९

पीठे तत्र क्रममनुगतो निःसमानस्तपस्वी
रुद्राध्यायी सततमभवच्छ्रीनृसिंहोऽधिकारी ।
साक्षात्कारप्रथितमहिमा देवतानामृषीणां
कर्णाटक्ष्मापतिरपि सदा तस्य साहायकेऽभूत् ॥ ९०

यात्रासक्तः प्रथितमहिमा निग्रहानुग्रहेषु
स्वीचक्रे तं धनपतिधनं सर्वधर्मावनेच्छुम् ।
क्षेमासक्तः स्वयमपि गुरुः सर्वशक्तोऽपि चाद्यः
स्वीचक्रेऽस्यै शतमखसमं श्रीसुधन्वावनीपम् ॥ ९१

योगारूढः स च शमधनश्चन्द्रमौलिं सदार्चन्
वाचां देव्याः परमकरुणां सर्ववेद्यां वितन्वन् ।
पूर्वान् सर्वानपि च नितरां देशिकान् प्रीणयंश्च
क्षोणीपालानपि च नमयन् सिद्धसिंद्धश्चचार ॥ ९२

जक्षन्मूलं मधुरसफलं कारवल्लीं सतोयां
शासच्छिष्यानपि निगदितं धर्मजातं स देवः ।
सर्वामिच्छामपि परिजहत्सर्वभूमौ चकास-
ञ्जाग्रद्रात्रौ तपसि निरतः पर्यगात् स्वात्मसंस्थः ॥ ९३

सङ्गृह्णन् स्वानटनकुशलान् यात्रिकान् सत्यनिष्ठान्
　शिष्याञ्शिष्टान् प्रणतशिरसः सम्पदा चानुगृह्णन् ।
धूर्तानन्यान् विकृतिमनसो मन्त्रनिष्ठो निगृह्णन्
　देशानेवं हितमुपदिशन् भासयामास योगी ॥　९४

यो वाग्देव्याः प्रतिदिनमनुस्यूतपूजां वितेने
　स्वेष्टं भक्ताः स्मितशुचिमुखं लेभिरे यं विलोक्य ।
येनानुक्ता श्रुतिरजनयद्धर्मनिष्ठाञ्जनानां
　यस्मै भूपा मुदितहृदयाश्चक्रुरग्र्यां सपर्याम् ॥　९५

यस्माद्बिभ्यद्रुधिरपचयैः प्राद्रवद्ब्रह्मरक्षो
　यस्याशास्तिः कुशलमफलत्तत्क्षणं साधकानाम् ।
यस्मिन् सर्वो गुणमणिगणः सर्वदोवास पूर्णः
　सोऽन्वर्थः श्रीगुरुसुरपतिः श्रीनृसिंहश्चकाशे ॥　९६

श्रीमान् देशेष्वधिकशरदश्चौत्तराहेषु योगी
　यात्रां तन्वन् कुशलमतिना प्रार्थितः कृष्णराजा ।
प्रत्यागच्छन् स गुरुरधिकं सान्त्वयामास तुष्टः
　शम्भुं नित्यं वसति धनदः सेवमानः सहैव ॥　९७

द्वन्द्वातीतां स्थितिमुपगतः सोऽपि योग्युद्धतेभ्यः
　स्वं माहात्म्यं प्रथयितुमना मानुषेभ्यश्चुकोप ।
भङ्गोत्तुङ्गं विमुखमतिथौ सिन्धुमालोक्य धीमा-
　नाजह्रेऽस्त्रं रघुकुलपतिर्हस्तपद्मेऽग्निकल्पम् ॥　९८

देशानेवं शुचिपदगतैः पूतपूतान् वितन्व-
न्नन्यादृक्षां निरुपमजयस्तम्भकल्पां समाख्याम् ।
भूमिं लक्ष्मीमिव च विसृजंस्तत्र तत्राप्रमेयः
शक्तिं दीप्रां मनुगणनिधिर्दर्शयामास स स्वाम् ॥ ९९

संवर्धिष्णुस्त्रिपुरविभिदः पूजया चन्द्रमौले-
स्तुङ्गातीरं बुधवरवचश्चर्चयालङ्करिष्णुः ।
भ्राजिष्णुः स्वे महिमनि रुचा योगदीपस्फुरन्त्या
जिष्णुः शिष्यं सनकसदृशं चिन्तयामास भूष्णुम् ॥१००

दैवी वाणी कथमपि भवेत्सम्भवेदात्मनीनो
धीमान् शिष्यः शिवगुरुसमप्राज्ञरामस्य पुत्रः ।
प्रत्यग्वाणी वदति नितरामर्थ्यमाना तमेव
ध्यायन्नेवं स गुरुरभवत्सत्यसङ्कल्पनिष्ठः ॥ १०१

स्वयं प्रादुर्भूतां मनसि रुचिरां तामपि गिरं
शृणोति स्मापूर्वां गिरमिव गिरः स्वच्छमधुराम् ।
ततो गत्वा देवीसदनमशृणोद्वादनरवं
प्रसूनं चापश्यद्धवळममलं तच्चरणयोः ॥ १०२

विनिश्चित्य प्राज्ञो गुरुरपि ततो भाविविषयं
निमित्तं सम्पूर्णं शुभमपि विदित्वा च मुदितः ।

तमेव स्वीकर्तुं महितमकरोद्रामतनुजं
मनस्यादर्शाभे प्रचुरतपसा सिद्धशरणे ॥ १०३

॥ इति श्रीनृसिंहभारतीविजये पूर्वभागे प्रथमः सर्गः ॥

---

## ॥ द्वितीयः सर्गः ॥

स्वामी देवस्तपसि निरतस्तां समालोच्य रीतिं
ध्यायन्नम्बामधिककुतुको वाञ्छितार्थप्रदात्रीम् ।
श्रुत्वा श्रुत्वा महिसुरपुरादागतेभ्यो जनेभ्यो
बाल्येऽप्यस्य स्थितिमनुगुणां निश्चिकायाथ यात्राम् ॥

लक्ष्मीरामप्रियतनुभवो बालकश्चन्द्रकल्पो
बाल्ये तिष्ठन् स्वयमुपगते बार्हदारण्यके स्वे ।
ज्येष्ठाद्विद्यां विधिवदनिशं शिक्षमाणो निकामं
कर्णाटानामधिपुरि शिवस्वामिनामा तदासीत् ॥ २

स्वं सङ्कल्पं बहिरुपनतं वर्णिनं धर्मनिष्ठं
धीरं शान्तं विमलधिषणं तं गुरुः सोऽभिजज्ञे ।
आचार्याद्यः सकलमधियन्निर्भुवंस्तद्विशेषा-
नाचार्यत्वं स्वयमपि ययौ बुद्धिशक्तिर्हि चित्रा ॥ ३

श्रुत्वैवैवं द्रुतमभिगतो राजधानीं प्रशस्तां
स्वोद्देशेऽस्मिन्नधिककुतुकं सोऽप्यवोचन्नृपालम् ।
जानीषे त्वं जगति नृपते शारदापीठमग्र्यं
पूर्वैः शान्तैर्मुनिभिरधिकं भूषितं तं च धीरैः ॥ ४

पीठे तस्मिन् सदृशमधिकं कञ्चिदन्वेषमाणं
मामत्रत्यं मुनिकुलभवं बालकं देव्यवोचत् ।
लक्ष्म्या पत्न्या विधिमनुसरन् यस्य तातः प्रशस्तो
रामो वन्द्यो मुनिरिव बभौ सर्ववेदो विधिज्ञः ॥ ५

ज्येष्ठं विद्यानिधिमतिगुणं तस्य लक्ष्मीनृसिंहं
भूयो दातुं सहजमवदं नानुमेने स तच्च ।
भूपालामुं सहजविनयं बालमाकारय त्वं
सौधे पृच्छाम्यमुमुडुपतिं ज्योतिषा किं स वक्ति ॥ ६

एवं प्रोक्तः स च नरपतिश्चानिनायार्भकं तं
पृष्टोऽभाणीत् स च शुभमयान्युत्तराण्यद्भुतानि ।
तच्छ्रुत्वा तं स च शुभमतिः प्राह लक्ष्मीनृसिंहं
मोहं त्यक्त्वा सपदि तनुवो देशिकादेशमावाम् ॥ ७

पृष्टो बालः सदसि वदति स्तोत्रमत्यन्तचित्रं
सीमन्तादिं शुभमपि पिता पूर्वजे वर्तमाने ।
चक्रे गर्भेऽप्यभिमततमं श्रीशिवस्वामिनाम
प्रज्ञासम्पद्गुणमणिभृते योगिवंशेऽस्य जन्म ॥ ८

यः प्रज्ञायां सुरपतिगुरुर्वाक्पटुत्वे कुमारो
धैर्ये मेरुस्तपसि नितरां भाति चौत्तानपादिः ।
मार्कण्डेयः पशुपतिपदाम्भोजपूजाविधाने
रम्ये रूपे कुसुममयशरस्तं कथं सन्त्यजेयम् ॥ ९

सूनौ यस्मिन् विधिमनुसरन् सम्प्रसूते तटाके
मग्नो मोदह्रद इव पितॄन् शीकरैस्तत्प्रसूतैः ।
ऊर्ध्वायातैरमृतशिशिरैः प्रीणयन् बीजदानं
कृत्यं चान्यत् सदृशमकरोत्तं कथं सन्त्यजेयम् ॥ १०

एवं नानावचनचतुरं तत्र लक्ष्मीनृसिंहं
भ्रातृस्नेहप्रसरविवशं तं गुरुः सञ्जगाद ।
मैवं भूयः कथय वचनं शास्त्रनिष्णातबुद्धे
पृथ्वीपाले मयि च सहजप्रीतिमालोचय त्वम् ॥ ११

एवं शुष्यत्कमलवदनं पूर्वजं तस्य भूयो
वाक्योद्युक्तं स च गुरुवरः शारदाध्याननिष्ठः ।
वाचा दृष्ट्या सममुपदिशन् सान्त्वयामास भूयो
मोहापोहे भवति परमं साधनं सद्गुरूक्तिः ॥ १२

ओमित्येतद्वचनमवदत्पूर्वजोऽप्यस्य धीमान्
शान्ताहन्तो मुदितवदनस्तच्च मीमांसमानः ।
को वा लोके भवति विमुखः स्वागतायां समृद्ध्यां
प्राज्ञो धीमान् स खलु सततं धर्मसूक्ष्मे प्रवृत्तः ॥ १३

सर्वज्ञः श्रीपटुतरवटोः प्रेमराशेरुदात्त-
स्वान्तोन्नत्याः स्वयमुपचितश्रीततेर्मोदवृद्धेः ।
सत्सन्यासे बहुमतशिवस्वामिनः सर्वमर्हं
तत्संमत्या भवुकसमये योगिराजः स तेने ॥ १४

संख्यावन्तं नवमवयसि प्रेष्ठमाषाढषष्ठ्यां
सद्विद्यार्हं परिणतधियामाश्रमं तं तुरीयम् ।
सर्वज्ञोऽसौ विदितमहिमा ग्राहयन्नक्षयाब्दे
सत्ये तिष्ठन्निरवधिसुखे पूर्णकामो बभूव ॥ १५

गुर्वादिष्टं महदभिनवश्रीनृसिंहाभिधानं
सच्छिष्याणां सकलशुभदं सच्चिदानन्दपूर्वम् ।
भिक्षुर्बालः शिवपदयुतं योगपट्टं च गृह्णन्
व्याख्यापीठ्यां क्षितिसुरवरैः पूजितैरभ्यपेचि ॥ १६

भिक्षोर्गृह्णञ्श्रुतिसमुदितं तत्त्वमस्यादिवाक्यं
ब्राह्मे ज्योतिष्यभिमततमे राजमानोऽयमासीत् ।
दाता योगी परिणतवया मन्त्रमूर्तिर्मनून् स्वां-
स्तस्मै प्रादान्निरवधितपास्तत्कराब्जोदिताय ॥ १७

राजा प्रादात् कलभयुगळं सर्वरत्नोपहारै-
र्गीष्पत्याद्याः स्वयमपि ददुः स्वस्वनिष्ठां समृद्धिम् ।
गोप्त्रे तस्मै स्वयमुपनतस्वात्मविद्याय देवा
माण्डूक्योक्ते महसि नितरां सोऽपि तस्थौ महात्मा ॥

तस्मिन् काले निरुपममहे शारदायाः प्रसादो
मूर्तो भाग्यं बहुजनिकृतं भारतस्यास्य योग्यम् ।
सौरं तेजो निखिलनयनाम्भोरुहानन्ददायि
श्रीरक्षय्या निगमनिवहस्याविरासीन्नवीना ॥ १९

हंसावेतौ युवपरगुरू स्वात्मविद्याविहारौ
संद्रष्टॄणां हृदयकमलोल्लासिनौ नित्यशुद्धौ ।
श्रुत्याह्लादप्रवचनपरौ सद्विवेकप्रधानौ
संरेजाते मुनिकृतगुहासूक्तसिद्धान्तसारौ ॥ २०

योगी वृद्धः शयनसमये जाग्रतं सुप्रसन्नं
पश्यन् सर्वोऽहमिति मुहुर्भाषमाणं प्रशान्तम् ।
वेदान्तार्थप्रवचनपरं वामदेवादिकल्पं
प्रत्यग्दृष्टिं स भृशमतुषच्चन्द्रमौळेः प्रसादे ॥ २१

पश्चात् पश्चात्प्रवहणपरां सह्यजां प्राज्यतोयां
नित्यास्वाद्यां गिरिशगिरिजादर्शनेनोत्सुकां च ।
स श्रीरङ्गे मुररिपुपदाम्भोजजातामिवाच्छां
पश्यन् मेने परिरचयितुं तत्तटे व्यासपूजाम् ॥ २२

चातुर्मास्ये महति स गुरू राङ्कवैर्हंसचिह्नै-
स्तन्वन् प्रीतान् प्रवचनपटून् रत्नकैर्निष्कपूर्णैः ।
प्राज्ञानर्हानभिनवमुनिं वाचयञ्शास्त्रसारा-
नग्रे देव्याः सदसि पटुतां वीक्ष्य तस्याभिरेमे ॥ २३

श्रीवाग्देवीपरमकरुणां धापयन् दुग्धधारां
तं सन्मन्त्रैः पथि विरहयन् खेदमध्वप्रचारे ।
नूत्नं तेजः सवितुरधिकं वर्धयंस्तस्य दृष्ट्या
कीर्त्यै रेजे स पुनरधिकं दक्षिणाम्नायपीठ्याः ॥ २४

मन्त्रादेशं नियमसरणिं सर्वतन्त्रार्थसारं
भाष्यस्यार्थं नियमसहितं शाङ्करस्याखिलस्य ।
पूजारीतिं मदनदहनस्यार्तिहन्तुर्जनानां
गृह्णन् पूर्वान्नवगुरुरभूद्बालभावेऽपि वृद्धः ॥ २५

नानादेशान् गुरुरनुचरन् तेन बालेन वृद्धो
योगी तस्य स्थितिमपि चिरं सर्वतीर्थाधिकां च ।
जानन् कृत्यं स्वकमपि करे तीर्थदानादि सर्वं
यच्छन् मेने गिरिशगिरिजानुग्रहं मूर्तमेव ॥ २६

छायाकल्पं विहितसमये पोषयन् सत्कथाभिः
स्वाचारं च स्वयमुपदिशन् सादरं शास्त्रवाचा ।
नित्ये कृत्ये श्रमविरहितं विद्यया तं वितन्वन्
योगी रेजे जनकजननीभ्रातृकल्पोऽसमानः ॥ २७

जम्बुक्षेत्रे निखिलजननीपूजने स्वं प्रभावं
हालास्ये च प्रथितमहिमा मीननेत्रार्चनादौ ।
आविष्कुर्वन् क्रममनुसरन् रामपादप्रचारैः
पूतं सेतुं जलधिपारेखं सोऽथ सम्प्राप पूज्यम् ॥ २८

मुग्धाञ्शिष्यान् सपदि शमयन्निग्रहानुग्रहादौ
शक्तो वृद्धो मुनिनरपतिः सिन्धुना स्तूयमानः ।
ताम्रातीरं चिरमधिवसन् कान्तिमत्यक्षिपात्रं
जीवन्मुक्तः स युवमुनिना कन्यकाक्षेत्रमागात् ॥ २९

स्नात्वा सिन्धौ विहितसमये पूजयंस्तत्र देवीं
लीलालोलां नृपतिविहितां संविधां चापि गृह्णन् ।
भक्त्याहूतो विशदमनसा रामराजेन योगी
प्राप प्रत्नां नवनिधियुतां मङ्गळां राजधानीम् ॥ ३०

भास्वद्रत्नैर्भुजगशयने भ्राजमाने शयानं
सूर्यज्योतिःसदृशवसनं सर्वसम्पन्निदानम् ।
भूषाभास्वच्चरणनळिनं पद्मया भासमानं
सान्तेवासी स गुरुरनमत् पद्मनाभं प्रसन्नम् ॥ ३१

वर्षन् सारं मधुरमधिकं शास्त्रसिन्धोर्गृहीतं
विज्ञानास्त्रैः फलभरनताञ्शालिशिष्यान् समग्रान् ।
सद्वागब्दैः समधिकलयन् सद्गुरुर्द्वादशात्मा
शिष्येणायं विनयगुरुणा चोत्तराशां प्रतस्थे ॥ ३२

शिष्यान् द्रष्टुं स गुरुरखिलान् प्रस्थितः क्रोधनाब्दे
नानादेशान्नवगुरुयुतः सञ्चरन् द्वादशाब्दान् ।
श्रीशृङ्गाद्रिं निरुपमयशाश्चेश्वराब्दे गतोऽसौ
स्तोत्रैरम्बां सहजमधुरैस्तुष्टुवे मोदसिन्धुः ॥ ३३

जीवन्मुक्तात् प्रणवशरणाच्चायमात्मेत्यभिज्ञात्
स्वत्मानन्दानुभवमुदिताज्ज्यायसो देशिकेन्द्रात् ।
श्रीविद्यादिं मनुमनुगुणं प्राप्तमावर्तयन् स्वं
नूत्नश्रीकः शिवनवगुरुश्चन्द्रमौळिं सिषेवे ॥ ३४

स्वात्मारामं परममभिदं साधु शुश्रूषमाणो
मेने ब्राह्मं पदमपि महोपासनाप्यं तृणाय ।
तत्र स्थित्वा नियतनियमः श्रीनृसिंहो विजिह्मः
शान्तस्वान्तः स्थिरतरमतिर्निर्विकल्पे समाधौ ॥ ३५

श्रीनिर्वाणं परगुरुरगात् स द्व्यशीत्यां समानां
संयातायां सुकृतमखिलं तत्र शिष्ये निधाय ।
नान्यं तस्मादभिनवममुं मेनिरे शिष्यवर्गाः
भाति ज्योतिर्नवमपि पुरा ज्योतिषो नातिभिन्नम् ॥ ३६

याते तस्मिन् मनुगणमये योगिनि श्रीनृसिंहे
व्यासर्ष्युक्तां सरणिममितां स्वस्वरूपावसानाम् ।
सर्वां पूजां विधिवदखिलश्रेयसे शास्त्रदृष्टां
सिद्धिक्षेत्रे शिवनवगुरुः क्लिश्यमानोऽस्य तेने ॥ ३७

एतच्छ्रुत्वा दिशि दिशि जना सस्नुरात्मस्वरूपं
तं ध्यायन्तः स्वरसरुचिरप्रेमपात्रं विदन्तः ।
भाषन्ते तद्विधिकृतमहायज्ञपूर्तौ प्रवर्त्या-
च्छ्रेष्ठात् पूताद्भृशमवभृथादुत्तमं हि प्रवीणाः ॥ ३८

हस्तेकृत्य स्वयमुपनतां नित्यमद्वैतलक्ष्मीं
प्राध्वं कृत्वा त्रिणयनमुमावल्लभं चन्द्रमौळिम् ।
वाचां देव्याः पदकमलयोर्जीविकाकृत्य सेवा-
मानन्दोत्थं स गुरुरखिलं पद्यमच्छोद्य रेमे ॥ ३९

सर्वक्लेशप्रशमफलदस्वात्मसम्प्राप्तिहेतौ
योगे निष्ठस्तदुचितपथं सेवमानोऽसमानः ।
मार्गापेक्षी हृदयतुरगं स्वेच्छवेगं निगृह्णन्
स्थानं लब्ध्वा रसघनमयं श्रीनृसिंहो विरेजे ॥ ४०

तर्ह्यायातो महिसुरपतिः प्रेषितो राज्यलक्ष्म्या
तस्मै प्रादाद्गुरुरपि महद्रत्नजुष्टं किरीटम् ।
राज्यं लेभे पुनरपि च यः सद्गुरूणां कृपातो
यच्चाप्यासीत् प्रथमनिहितं राज्यचिह्नं वरिष्ठम् ॥ ४१

एवं श्रीमानभिनवगुरुर्द्वन्द्वसङ्गाद्विमुक्तः
सर्वान् देवान् स्वहितकरणे चाभिलक्ष्यानुकूलान् ।
वर्षान् षट् च क्षणमिव नयन् देशिकावेशितात्मा
त्रिप्रस्थानीं सकुतुकमथाध्यापयामास शिष्यान् ॥ ४२

इत्थं नित्यं प्रयतचरितं स्वाशयानन्यभूतः
प्रत्यासन्नो विनयमहितः प्राप तं ज्येष्ठभूपः ।
यः शृङ्गाणां निवहमसमं हैममासर्क्षसीमं
कीर्त्यारोहक्रममिव मुदासज्जयद्देवगेहे ॥ ४३

लोकाचार्य प्रयतमहितास्त्वत्पदाब्जप्रचारै-
दैशा नेत्रप्रसृतभवुकालोकनैः सम्पदाढ्याः ।
स्वच्छादर्शैर्निगमसरणेरौत्तराहा वचोभिः
स्वात्मालोकप्रवणमतयो धर्मनिष्ठा भवन्तु ॥ ४४

एवं श्रुत्वा मधुरवचनं तस्य भूपस्य शम्भो-
राज्ञां लब्ध्वा धवळमतुलं लिङ्गमादाय हस्ते ।
शीतैः स्पृश्यैर्विपुलमुरलाकेतकीगन्धवाहै-
र्गोकर्णेशं स हृदि कलयन् सेव्यमानः प्रतस्थे ॥ ४५

क्षेत्रे तस्मिन् प्रथममखिलान् क्षेममापृच्छमानः
सद्वाग्दीपैः सहजतिमिरं दूरमुत्सार्य सद्यः ।
हृद्यं धार्यं श्रुतिखनिभवं धर्मरत्नं महार्घं
प्रादाल्लक्ष्म्यै परसुखकृते चागतेभ्योऽखिलेभ्यः ॥ ४६

तत्र स्थाणुं सकलहृदयस्थास्नुमीशं महोक्षा-
रूढं शुभ्रं हिमगिरिसुताश्लिष्टवामार्धभागम् ।
नेयानीतैर्विकचकमलैः पूजयन् पूजकाग्र्यो
लक्ष्म्याः पत्याप्यविदितपदं पिप्रिये देशिकः सः ॥ ४७

अर्कः पूर्वादधिगतमहादेवदत्तान् मयूखा-
नादाय स्वानिव परमुदोत्तिष्ठमानोऽसमानः ।
सर्वान् लोकान् स्थिरचरयुतान् पोषयन् पश्चिमाब्धि
यत्र प्रत्यग्वदननलिने ताञ्शिवे न्यस्य याति ॥ ४८

तत्र क्षेत्रे स परिगमयन् माघमासि प्रशस्तां
शैवीं रात्रिं विधिमनुसरन् सन्नताञ्शिष्यवर्गान् ।
बोधं शुद्धं समधिगमयन् स्वास्थ्यदायी जनानां
रेजे धर्मं प्रथममुनिभिर्वर्णितं वर्णयंश्च ॥ ४९

एवं यात्राक्रमपरममुं भूपती रामचन्द्रो
भक्तिश्रद्धाभरनतशिरा रत्नहारोपहारः ।
प्रत्यादेशे हरिहयपुरस्यातिरम्ये पुरे स्वे
शम्भोः पूजामखिलफलदां सद्गुरुं तं ययाचे ॥ ५०

नूत्ने हर्म्ये गुरुसमुचिते वैजयन्तोपमाने
पुष्पभ्राम्यन्मधुकरलसन्नन्दनारामरम्ये ।
राजीवाक्षो रघुपतिरिव ब्रह्मनिष्ठं वसिष्ठं
नत्वा ज्योतिश्चिरविलसितं प्राप राजा स रामः ॥ ५१

स श्रीपीठे नवमणिभृते नूतने राजते स्वे
स्थित्वा कर्तुं जनसमुदये वाङ्मुखं तं ययाचे ।
अर्कः पूर्वाचलमधिगतो व्यापिभी रश्मिभिः स्वै-
र्ध्वान्तं सम्यग्धुवति निखिलानन्दकारी प्रणम्यः ॥ ५२

इत्थं देशान् गुरुरनुचरन् प्राप्यकोल्हापुराख्यं
राजस्थानं नृपवरकृतामर्हणामभ्युपागात् ।
यत्पद्मस्था सततविकसत्पद्मपत्रायताक्षी
देवी लक्ष्मीरधिवसति च श्रीतर्तिं स्वां सृजन्ती ॥ ५३

लोकाचार्यः सदयहृदयस्तत्र देवीं समर्चन्
माहाराष्ट्रानखिलविषयान् श्रीविशालानतानीत् ।
सर्वान् विप्रान् विहितकरणासक्तचित्तानकार्षी-
च्छ्रीसिन्दूरं नवनवशुभं सुन्दरीभ्योऽप्यादिक्षत् ॥ ५४

अद्रिं शृङ्गं नियतवसतिं वैदिकीनां कलानां
विद्यारण्यप्रभृतिमुनिभिः सेवितं ब्रह्मकल्पैः ।
निस्त्रैगुण्यो हृदि स कलयन् सत्यलोकादनूनं
दुःसञ्चारामपथबहुलामुत्तराशामहासीत् ॥[1] ५५

यस्मिन्नद्रिः कनकगिरिणा स्पर्धते रत्नभूम्ना
लक्ष्म्यारामश्रिरविकसितो नन्दनं चातिशेते ।
स्थानं पूतं भुवि विजयते सूरिभिर्ब्रह्मलोकः
तं स्वं देशं स हृदि चकमे ब्रह्मविद्ध्यानयोग्यम् ॥[2] ५६

शान्ताजानिः पुरि विजयतेऽरुन्धतीजानिकल्प-
स्तुङ्गा गङ्गा मधुरसवहा सर्वतापापहन्त्री ।
तत्स्वं देशं मनसि कलयन्नित्यवाराणसीति
ध्यायन् पूर्वान् स गुरुरधिकं प्राप पल्लीरदेशम्[3]॥ ५७

तत्र स्तेनाः कतिचिदहरन् दुर्विनीता मठस्वं
प्रत्याहर्तुं तदपि स गुरुस्तत्र वासं चकार ।
यद्यप्यासन्नवनमनुजा राजकीयास्तथापि
स्तेयं लोके बलमिति कथा प्रावृतत्तत्र नृणाम् ॥ ५८

---

1. கோல்ஹாபூர். 2. ஸ்ரீ சிருங்ககிரி. 3. பல்லாரி.

उग्रं दध्यौ गुरुरपि गुरुं स्तेनराजं त्रिणेत्रं
दुर्गामम्बामपि परशिवां नष्टवित्तप्रदात्रीम् ।
त्यक्ताहारः स्तिमितनयनस्त्यक्तनिद्रश्च यावत्
प्रत्याजह्रे नृपतिपुरुषस्तावदेतत् समस्तम् ॥ ५९

क्षेत्रज्ञत्वं भगवदुदितं कर्मसस्याग्रदत्वं
दुर्ज्ञेयत्वं विषयमनसां भूतदेहत्वमीशः ।
व्याचक्षाणः किल परशिवः क्षेत्रभागात् प्रशस्ता-
त्तुङ्गातोयैः सह शिवगुरोराश्रमे संन्यधत्त ॥ ६०

शिष्याः सर्वे तुतुषुरधिकं राजभृत्याश्च नेमुः
सुब्रह्मण्यप्रमुखविबुधास्तुष्टुवुस्तं मठस्थाः ।
देवाः सर्वे स्वयमपि तदा नेशिरे तस्य विघ्ने
सिद्धौ तस्थौ गुरुरपि मुदा निर्ममो निर्विकारः ॥ ६१

तत्रैवायं बहु विरचयन् वज्रवैदूर्यचित्रं
भूषावृन्दं नवमतिगुणं श्रीयुतस्तुष्टशिष्यैः ।
शक्तिं स्वस्थां बहु विशदयन् स्वस्य नाम्नोऽनुरूपां
भेजे तुङ्गातटगतमठं शारदानित्यवासम् ॥ ६२

एवं शान्तारमणवसतेः प्रस्थितः पार्थिवाब्दे
दृष्ट्वोदीच्यानवहितधियः प्राक्तने धर्ममार्गे ।
मध्येमार्गं व्रतमुपनतं साधु निर्वर्त्य पुण्यं
स्वाचारार्हं महितमुटजं प्राप तुङ्गातटस्थम् ॥ ६३

तत्र स्थित्वा कतिचन समा ध्याननिष्ठो गरिष्ठो
विद्यावृद्धाववहितमना भूषणं सर्वसिद्धेः ।
आज्ञादात्रीमुचितविषये शारदां ग्रन्थहस्तां
नत्वा वीणामधुरनिनदैश्चोदितः स प्रतस्थे ॥ ६४

गोत्रां गोत्रोचितबहुसुतश्चामराजस्तदात्वे
कीर्त्या बुद्ध्या प्रथितकुलया भार्यया राजलक्ष्म्या ।
धर्मासक्त्या सममतियशाः प्रीणयन्निर्विशेषं
तं शेषाद्रेर्मतिमनुसरन्नाजुहाव स्वदेशम् ॥ ६५

पृष्ट्वा तत्र क्षितिपतिममुं पूर्णभावं प्रजाभि-
स्ताश्चायुष्यप्रदशुभवरैर्भूषणैश्चाभियोज्य ।
चातुर्मास्यं व्रतमपि शुभं सोऽत्र कृत्वा पवित्रं
विद्यासौधे महति शुशुभे स्थापयित्वा गणेशम् ॥ ६६

तत्कालेऽसौ नृपतिरभवन्मैथिलोऽध्यात्मनिष्ठः
सा पुरासीदपि च मिथिला सर्वविद्याविशाला ।
विद्यादायी स गुरुरभवद्याज्ञवल्क्यो मुनीन्द्रः
प्रापद्विद्वज्जनसमुदयः शास्त्रदक्षः समन्तात् ॥ ६७

विद्वद्धंसा नृपसभसरः सादराह्वानसारं
सत्तत्त्वाम्भोरुहपरिलसत्तत्त्वसम्पत्समेतम् ।
विद्याचर्चापरिमलभृतं कामकालुष्यहीनं
तत्रागच्छञ्शरदि मुदिता राजहंसावदातम् ॥ ६८

राजीवाक्षं करतललसद्वेणुमध्यात्मविद्या-
चार्यं कृष्णं मृदुपदगतिं नित्यसन्तोषहेतुम् ।
राजा नन्दः पुलकिततनुः श्रीयशोदासमेत-
स्तं संप्रेक्ष्य स्मितसितमुखं विश्ववन्द्यं जहर्ष ॥ ६९

गौरीवाणीसरसिजकरानुग्रहं मोदगेहं
सत्काराहं बहुजनिकृतामन्दपुण्यप्रवाहम् ।
आचार्यः स प्रियनृपतुरासाहमानन्ददोहं
प्रीत्या चोक्त्वा निखिलजननीं प्रार्थयामास लक्ष्म्यै ॥ ७०

आनम्याथ श्रियमिव तदा योगिराजेन दत्तां
धृत्वा हस्ते कमलसदृशे संहतिं सत्कलानाम् ।
मालां चित्रां शुभसमुदयैरक्षतैः शोभमानां
भूपः पश्यन् समितिमधिकं श्रीगुरुं चाननन्द ॥ ७१

शेषाद्यार्यः प्रथमसचिवो दक्षिणः पञ्चशाखो
भूपालस्य प्रियमपि हितं निःसमानं वितन्वन् ।
आचार्यं तं सदृशसमये सेवमानो बभासे
वृत्रारातेरिव परगुरोर्गीष्पतिः पार्श्ववर्ती ॥ ७२

कृत्वा सर्वामपचितिमसौ रञ्जयन् राजधानीं
तं भूपालं सदसि समये हर्षयन् शास्त्रवाण्या ।
विद्वान् सर्वान् बहुमतिगिरा प्रीणयन् प्रीतिदानै-
र्भक्त्याकृष्टैः प्रकृतिपुरुषैरन्वितः स प्रतस्थे ॥ ७३

देशान् पश्चात् परिचितचरान् पादपूतान् वितन्वन्
किञ्चिद्दूरे द्विजजनभृते सोऽग्रहारे भवान्याः ।
वल्लीसेनाप्रियसहचरं कार्त्तिकेयं कुमारं
नित्यं सेव्यं परमतिमुदातिष्ठिपत् सर्वसिद्ध्यै ॥[1] ७४

मेघध्वानैस्तदनु रुचिरैः षड्जसंवादशीलैः
संनृत्यद्भिर्नयनसुभगं बर्हिभिः सेव्यमानः ।
दूरायातान् क्षितिसुरमुखान् मानुषान् प्रेक्षमाणो
मौनी प्रागात् सकलबिरुदैरन्वितः सोऽग्रहारम् ॥[2] ७५

यश्च ग्रामो निगमवसतिः पूतयूपाभिरामः
सर्वान् देवान् प्रयतहविषा प्रीणयत्यध्वरेषु ।
स्नातुं यस्मिन्नुषसि मधुरं वेदभागान् पठद्भिः
शिष्यैराम्रां सहजविनयैर्यान्ति विप्राः समेताः ॥ ७६

यस्मै स्वाद्यं मधुसमपयःशर्मदा निम्नगाम्बा
बालायेव स्वयमभिमुखी शर्करासारसारम् ।
दत्त्वा पुष्टिश्रियमभिमतां वीक्ष्य तस्यातिहृष्टा
भूयो रम्यानभिमततमानग्रहारान् प्रयाति ॥ ७७

आर्यः कृष्णो नृपतिसदृशो विप्रवर्यो वदान्यो
ज्ञात्वाचार्यं शुकगुरुसमाराधनासक्तचित्तम् ।
कंसारातिर्मुनिमिव मुदा नारदं वासुदेवः
श्लाघ्यैरर्घ्यैर्गुरुमुपचरन् जन्म तेने कृतार्थम् ॥ ७८

---

1. கோபிசெட்டிபாளையம். 2. கணியூர்.

तस्माद्ग्रामादचलकदलीक्षौद्रगन्धाभिपूर्णं
क्षेत्रं प्राप [1]प्रतनफलिनीपत्तनं शर्मदः सः ।
यस्मिन्नद्रेर्वसति रुचिरोपत्यकायां कुमारो
भक्तायेष्टं प्रणतिसमये दण्डपाणिः प्रयच्छन् ॥ ७९

जिह्वा यस्यापहृतसुरुचिः पित्तदोषाद्बुभुक्षा-
युक्तायेषन्मधुरमपि पयो रोचते नैव यस्मै ।
तस्यारोग्यं विरिरचियिषुः सन् भिषक्तान्निवृत्त्यै
तस्मै स्वाद्यं मधुरमुदकं मित्रभूतो ददाति ॥ ८०

एवं यस्मै विविदिषुधिये रोचते नैव मोक्षः
कामक्रोधप्रचयदुरिताविष्टचित्ताय तस्मै ।
योगी सम्यक्छ्रुतिनिगदितं भेषजं नित्यधर्मं
प्राज्ञो हृद्यं वितरति गुरुस्तद्रुचेः सिद्धिहेतुम् ॥ ८१

एतं न्यायं गुह इह वदन् दण्डपाणिर्मनोज्ञं
सद्भ्यो दत्ते सततमगदं स्वादु पञ्चामृताख्यम् ।
तत् सेनान्यं प्रथमभिषजं संसृतेर्दुःखहेतो-
र्यूयं नित्यं नमत गुहमित्याचचक्षे स मर्त्यान् ॥ ८२

गाते यं यं स गुरुरमलो देशमन्यादृशश्रीः
श्रद्धाभक्ती अपि शुभकृते तं तमाद्ये च गाते ।
गाते दृश्याः सपदि शुभदा सम्पदस्तं च देशं
त्यक्त्वा नित्याश्रयमिह भवेदाश्रितानां स्थितिः क्व ॥

---

1. பழநி.

तद्गच्छामः समदृशममुं साङ्ख्ययोगस्वरूपं
सत्यासक्तं विबुधविनुतं शान्तमायाविलासम् ।
द्वन्द्वातीतं स खलु वितरेदस्मादिष्टान् पुमर्थान्
नित्यान् प्रार्थ्यानिति निजगदुस्तत्र तत्रान्तिकस्थाः ॥

आचार्याब्दः स्ववधृतसदाचारनीरो गभीरः
शास्त्रस्तोमाहृताहितशुभाचारवर्षी पृथुश्रीः ।
सन्द्रष्टॄणां विपुलनयनानन्ददायी मनोज्ञो
विद्याविद्युल्लसितमहितो वाक्सुधासारवर्षी ॥ ८५

पश्चान्मौनी सुरपुरसमं नन्दनोद्यानजुष्टं
फुल्लैः पुष्पैर्विविधरुचिभिर्नारिकेळैः प्रकृष्टम् ।
स्वाद्यैर्दृश्यैर्बहुविधफलैः स्वर्णवर्णैः सगन्धैः
पूगैः पूर्णं मृदुळमृदुळैः शुभ्रताम्बूलपर्णैः ॥ ८६

मीनैः पीनैः सततचलनैः क्रीडमानैः सफेनैः
दृश्यैस्तोयैश्चपलकमलैर्नित्यपूर्णैस्तटाकैः ।
अब्ध्याकारैः सततमधुरैः शोभमानं समन्तात्
स प्राप श्रीप्रसृतमधुरापत्तनं निःसपत्नम् ॥ ८७

धात्रीरत्ने महति मधुरापत्तने निःसमाने
कान्त्यां सिद्ध्यां धनसमुदितौ राजवीथ्यां समृद्ध्याम् ।
पुष्ट्यां तुष्ट्यामपि च विनतैः सोपहारैः स शिष्यै-
र्हालास्येशं मनसि कलयन् मन्दमन्दं जगाम ॥ ८८

यन्मध्यस्थः सकलजगतामादिकर्ताष्टमूर्ति-
लिङ्गाकारः श्रुतिमयतनुः सौम्यसोमार्धमूर्धा ।
अन्तर्यामी स्ववशगमहामायया चिन्त्यशक्त्या
लीलास्तन्वन् दिशति सकलां सम्पदं साधकेभ्यः ॥ ८९

श्रीमीनाक्षी यदधिवसति प्रेक्षणेनाखिलानां
सर्वामृद्धिं सपदि दिशती लोकमातार्भकाणाम् ।
मुक्ताभास्वन्मुकुरमनिशं बिभ्रती रत्नजुष्टं
कारुण्याब्धिर्विकचनयना तन्वती लोकरक्षाम् ॥ ९०

श्रीमीनाक्षीरमणशरणं कारणं सर्वलक्ष्म्या
दन्त्यश्वोष्ट्रप्रवरविलसत्तोरणं शुद्धवर्णम् ।
गीताम्नायस्वरततिलसद्ब्राह्मणप्राङ्गणं स
प्राज्ञः पश्यन् विकचनयनः प्राप कल्याणसौधम् ॥९१

हालास्येऽस्मिन् सवितृसदृशः श्रीनृसिंहस्तपस्वी
दैव्या गौरं वपुरभिनवं नालिकेरं प्रकल्प्य ।
पूज्यं रोषस्फुरितनयनभ्रूलतो दुर्निरीक्ष्यः
सर्वैः शिष्यैः सविनयमथाभ्यर्थ्यमानः शशाम ॥ ९२

पूर्वाचार्यं धमनिनिचयाबध्यमानस्वकायं
वृद्धं धीरं मुनिमभिनवः स्वर्णवर्णो युवासौ ।
शान्तो नित्यं प्रियमनुचरंस्तीर्थदानादि सर्वं
कुर्वन् रेजे मणिरिव नवस्तस्य तेजःसमूहः ॥ ९३

इत्थं चित्रं विविधविषयं सच्चरित्रं पवित्रं
श्रोत्रास्वाद्यं प्रतिदिननवं ज्यायसो योगिनः सः ।
शृण्वन् गीतं ललितरचनं पिप्रिये वैणिकाद्यै-
स्तत् सर्वेषामपि च सुखदं किं पुनर्योगिराजः ॥ ९४

कृत्वा पाण्ड्यप्रथमनगरे युक्तरूपं समस्तं
लीलामूर्तेः स्तुतिमपि नतिं सुन्दरस्येशितुः सः ।
शिष्यान् भक्तिप्रवणहृदयान् यावदासीत् प्रयातुं
सेतुं तावद्विनयविजयी भास्करोऽमुं ननाम ॥ ९५

संख्यावत्ता वचनपटुता साधुता सत्यवत्ता
लक्ष्मीवत्ता प्रमितिपरता नम्रता मित्रवत्ता ।
आत्मज्ञानश्रवणचणता दातृतासक्तहृत्ता
यस्यैताः स्युः स खलु मतिमानात्मवित्सङ्गमेति ॥ ९६

श्रेयोऽभ्यर्थी स शुभहृदयो भास्करः सोपहारो
विद्याधर्मप्रवणहृदयैर्विप्रवर्यैः समेतः ।
चातुर्मास्यं भुवनविदिते रामनाथाभिधाने
प्रार्थ कर्तुं नृपतिरवदत् पत्तने स्वे विधातुम् ॥ ९७

विद्यासेतुं विधिवदगमत्तं गुरुं सेतुपालः
श्रीमीनाक्षीपरमकरुणाभाजनं भास्करः सः ।
त्यागो हेतुर्निगमगदितः सङ्ग्रहे देशिकस्य
त्यागाद्रैक्वं गुरुमवनिपः प्राप जानश्रुतिर्हि ॥ ९८

भाग्याल्लब्धा मम जनिरिह श्रीगुरो रामसेतोः
पार्श्वे तस्मादमृतफलदा पावनी मेऽपि सेवा ।
प्राप्ता नो चेत् क्व च गुरुनृपः किम्पचानः क्व चाहं
गङ्गातीरे रघुपतिकृपां प्राप पुण्याद्गुहश्च ॥ ९९

किं वा रामः सकलभुवनानन्ददो धर्ममूर्ती
रूपौदार्यद्युतिभिरधिकं नेत्रचित्रापहारी ।
पिञ्छापीडः कपिशवसनो वेणुगानप्रवृत्तः
किं वा कृष्णः परमपुरुषः सुन्दरो वाथ सिद्धः ॥ १००

एवं नाना मनसि कलयंस्तं गुरुं वेगवत्या-
स्तीरे मार्गे मृदुलपवनाकम्पितारामरम्यम् ।
स्थानं स्थानं गुरुसमुचितं निर्मिमाणः क्रमेण
स्थानीयं तं जलधिपरिखं सेतुपार्श्वे निनाय ॥ १०१

मुक्तादामप्रचयविलसद्विद्रुमस्तोमरम्यै-
रूर्ध्वायातैश्चपलचपलैर्हस्तकल्पैस्तरङ्गैः ।
भक्त्याहूतो रघुपतिनिभः सिन्धुराजेन योगी
पूर्वं ख्यातं सकलसहितः सेतुपार्श्वं ययौ सः ॥ १०२

छायाभूतो यतिसुरपतेर्भास्करः सेतुपालः
स्वात्मारामं मिहिरसरुचिं सेवमानस्तमासीत् ।
पुण्यप्राप्यं जगति सुधियः साधुसङ्गं वदन्ति
ज्ञाता धीमान् स्वयमुपगते कः पुमांस्तत्र तृप्येत् ॥

सर्वाचार्यः सकलमनुजान् शिक्षयन्नत्र पूर्वो
वृद्धस्तेने परशिवगृहे सर्वतीर्थं नवीनम् ।
पश्चाच्छान्तैश्चरणपतितैः प्रार्थितः क्षेत्रिभिः स
प्रीतोऽवोचद्भवतु सहजं पूर्ववत् कोटितीर्थम् ॥ १०४

एवं वृद्धैर्भणितममृतं कोविदैर्गीयमानं
शृण्वन् सिन्धौ सकलजगतां पावने तत्र योगी ।
सत्सूक्तानामखिलदुरितध्वंसिनां साधुघोषं
तन्वन् सस्नौ क्रममनुसरन्नर्यमाभः स सिद्धः ॥ १०५

स्नातायातो रघुवरकरानन्दितं चन्द्रचूडं
स्नेहोदञ्चद्गिरिजतनयालोकनोत्फुल्लदेहम् ।
स्तुत्वानन्दप्रवणहृदयो ज्ञानिहृत्पद्मगेहं
स्वात्मानन्यं परशिवमगात् सेवितुं पत्तनं[1] सः ॥ १०६

तत्राभ्यर्च्य त्रिणयनमयं पार्वतीशं निराशं
मुक्तामिश्रैः सुरभिकुसुमैस्त्रिच्छदैर्बिल्वपत्रैः ।
श्रीप्रासादे श्रितजनहितामाशिषं च प्रसादं
दत्त्वा प्रायात् सह नृपतिना सस्मितो राजधानीम्[2] ॥

महादेवं सेतौ जनकतनयारामकीर्तिप्रवाहे
मनस्यातन्वानो मनसिजरिपुं मङ्गलाश्लिष्टगात्रम् ।
महाम्भोधौ रत्नाकरकरस्पर्शसंशोभमाने
महाकाशाकारं विमलमपि चाशेषदर्शी स रेजे ॥ १०८

---

1. இராமேசுவரம். 2. இராமநாதபுரம்.

आनम्यानम्य पौराः श्रुतिशतमुखा हस्तदत्तोपहारा
बद्ध्वा बद्ध्वोत्तमाङ्गे मुकुळसमकरौ सादरं वन्दमानाः ।
दृष्ट्वा दृष्ट्वा यतीशं परमशिवसमं भस्मचन्द्रार्धफालं
गत्वा गत्वा समीपं कनकधनसमानक्षताँल्लेभिरेऽस्मात् ॥

इति श्रीजगद्गुरुसच्चिदानन्दशिवाभिनवनृसिंहभारतीविजये
पूर्वभागे द्वितीयः सर्गः

---

## पूर्वभागे तृतीयः सर्गः

पुरीं विचित्रामथ पुष्पपूर्णै-
र्नवैर्वितानैर्महिळासुगीतैः ।
सुराङ्गनागीतसमैरुदात्तां
गुरुः स पश्यन् मुदितो जगाम ॥ १

पम्पासमानं निकषा तटाकं
शुकैर्मनोज्ञैर्मधुरं नदद्भिः ।

---

नाव्यादेशाज्जलधिपरिधेः पूतरामेश्वराख्या-
च्छ्रामादुच्चैरधिकनिबिडैर्नारिकेलादिवृक्षैः ।
रम्योद्यानैर्विकचकुसुमैर्नित्यसिद्धैः सुगन्धैः
साकं राज्ञा पुरमभिमतं रामनाथं ययौ सः ॥ १

यस्यासन्नं स्थलमतिशुभं नात्रपाषाणमग्र्यं
सूर्यादीनां सततनियतः सन्निधिर्यत्र वन्द्यः ।

क्रीडद्भिरन्योन्यमनेकमीनै-
मनोहरं हर्म्यमवाप देवः ॥ २

तत्राम्भोजप्रसवसुरभौ रम्यहर्म्ये विशाले
व्यासाचार्यापचितिसदृशप्राज्यवस्तुप्रचारे ।
श्रद्धायुक्तो हृदयसदृशे वासयन् देशिकेन्द्रं
चातुर्मासीव्रतविरचनं प्रार्थयामास भूपः ॥ ३

तस्यास्तिक्ये मतिमवहितां विस्मितः सोऽवगम्य
ज्ञात्वा शक्तिं विविधरचनेऽप्यन्वगाविर्भवन्तीम् ।
धर्मो भूयो भवतु भवतः सम्पदः सन्तु शस्ता
इत्याचार्यः सरसवचनैरभ्युपेयाय सर्वम् ॥ ४

---

एवं सिन्धोः स्थलमपि तटे दक्षिणेनापि यस्य
प्रख्यातः श्रीरघुकुलपतिर्यत्र शिश्ये कुशेषु ॥ २

श्रीकल्याणी भुवनजननी राजराजेश्वरी यत्
प्रीत्याध्यास्ते क्षितिपतिकुलाराधिता चन्द्रचूडा ।
विद्यन्ते यन्नगरमभितः सिन्धुकल्पास्तटाकाः
क्षेत्राण्यन्यान्यपि शुभफलान्यासते यत्समीपे ॥ ३

एवं पश्यन् स गुरुरधिकं तस्य देशस्य भाग्यं
भूपालस्य स्थितिमपि हितां व्यासपूजाविधाने ।
तत्रावासं मनसि चकमे सैकतेऽपि प्रदेशे
दोषे दृष्टिं न खलु मुनयः कुर्वते द्वन्द्वमुक्ताः ॥ ४

भूयो जज्ञे सह परिषदा कोविदानां महत्या
निष्णातानां सरसवचसामुत्सवः सर्वतन्त्रे ।
श्रीव्यासर्षेर्निगमवचसां संविभक्तुर्मुनीशः
शक्तिश्चास्मिन्नृपतिककुदि श्रीगुरोः सन्निधाने ॥ ५

आचार्योक्तावविहितमतिर्भास्करश्चात्र रामो
विद्यादेष्टा विदितमहिमारुन्धतीजानिरेषः ।
विप्रैः शुद्धैर्विदितचरितै राजधान्यप्ययोध्या
गायन्नेवं विबुधविसरो भक्तितन्त्रश्चचार ॥ ६

याभूद्रीतिर्निधिमति गुरोः पत्तने रामनाथे
चातुर्मासीव्रतसमुचिता भूपकल्पद्रुमोत्था ।
तादृग्रीतिः क्व च न महती दृष्टचर्यास वन्द्या
विद्वद्गीता श्रुतिगतचरी नापि सम्पत्समृद्धा ॥ ७

श्रद्धापूर्वं बहु वसु ददौ भास्करो दानशौण्डो
विप्रस्तोमो नियमविशदं सर्ववेदान् पपाठ ।
स्वस्थस्वान्तो गुरुरपचितिं चन्द्रमौळेस्ततान
प्राज्ञः कालं क्षणमिव जनो जातभक्तिर्निनाय ॥ ८

चातुर्मास्यं प्रवचनयुतं सद्गुरुः सत्कलानां
कृत्वा दुःखप्रशमनकृते विघ्नराजं प्रपूज्य ।
सम्पूज्य श्रीप्रथमजननीं सर्गरक्षान्तहेतुं
विद्यालक्ष्मीहिमगिरिसुतारूपिणीमास्त तृप्तः ॥ ९

विद्याराजः क्षणमिव महं नावरात्रं वितन्वन्
सर्वाः सिद्धीः सपदि कलयन्नर्चनेनाम्बिकायाः ।
वित्तैर्वस्त्रैर्विबुधनिचयं रञ्जयन् कङ्कणाद्यै-
र्योगी रेजे पुरहरशिरोजातमम्बु प्रयच्छन् ॥ १०

राजा सेतोः परगुरुसमं भास्करो भास्कराभं
पूजाकृत्ये निहितनयनः सद्गुरुं वन्दमानः ।
तत्तत् कुर्वन् प्रतिदिननवं कार्मणो मोदसिन्धुः
कालं यातं न खलु बुबुधे साध्यभक्तिप्रविष्टः ॥ ११

सद्यः शान्तो दुरितनिचयस्तत्र साहस्रपूजा
प्राप्ता देव्याः पशुविशसने संदिदेहाथ राजा ।
श्रीचक्रेऽम्बां गुरुमनुदिनं पूजयन्तं प्रवीणं
तं सर्वज्ञं स पदकमले सन्निपत्येदमाह ॥ १२

आचारोऽत्र प्रसरति चिरात् प्राणिहिंसाप्रधान-
स्तं कर्तुं मे मनसि विशयः सम्प्रति त्यक्तुमेतम् ।
आजानीहि त्वमिह सदयः सद्गुरो मामिदानीं
तत् कर्तव्यं यदिह कुशलं योगिदृष्टिर्हि सत्या ॥ १३

श्रुत्वा सर्वं नृपतिवचनं सान्त्वयंस्तं च सम्यक्
प्रातर्ब्रूयामिति स वचनं प्राह तत्त्वावमर्शी ।
सिद्धः सोऽपि स्वयमिह मतिं प्रेक्षते स्माम्बिकाया
रीतिर्ह्येषा विलसतितमां सत्यसन्तोषदात्री ॥ १४

ध्यायञ्शुद्धां गिरमपि परामम्बिकां स्वात्मसंस्थां
प्रेक्षाश्चक्रे कनकखचिते भाजने शुभ्रशुभ्रम् ।
दुग्धं देव्याः परिसरगते नाळिकेरादिजुष्टं
स्वप्नक् स्वस्थः स गुरुरतुषन्निर्णयज्ञोऽथ वक्तुम् ॥ १५

प्रातर्भूपं धवळभसितस्मेरकायं प्रणम्रं
स्वप्नं दृष्टं समधिगमयन् दाक्षिणः सर्वतन्त्रे ।
आचार्यः स प्रणयविनयभ्राजमानं समूचे
पूषेवोस्रैस्तिमिरनिकरं तस्य मोहं विधुन्वन् ॥ १६

वामाचारो दुरितबहळः सेव्यते यातुधानै-
र्दोषास्पृष्टो निगमविहितो दक्षिणः सत्त्विकोऽयम् ।
पन्थाः पूर्वैः समयमतिभिः सेव्यते तन्नृपाल
स्वास्तामस्मिन्नपि स विषये भाविकल्याणहेतुः ॥ १७

इत्युक्त्वासौ स्मितसितमुखो मन्त्रसर्वस्ववेदी
प्राज्ञैर्विप्रैर्विदितनिगमैर्जप्यनिष्ठैः सुशीलैः ।
शुद्धे क्षेत्रे त्रिपुरजयिनीं सुन्दरीमभ्यषिञ्चत्
पूजां साध्वीं विजयसमये वैदिकीमप्यतानीत् ॥ १८

राजा सेतोरमितमतुषत् पात्रमम्बाकृपाया
राज्ये श्रीरप्यपुषदधिकां सम्पदं मातृगुप्ता ।
राष्ट्रं श्रीमन्निखिलमशुधद्देशिकादेशवश्यं
रामः स्वामी सततमतृपत् सद्गुरौ मन्त्रसेतौ ॥ १९

सर्वं राज्यं नृपतिरददादध्वरस्याद्भुतस्य
स्वात्मानं च प्रणतिपरमो दक्षिणां नावरात्रे ।
सम्पद्दात्रे भुवनगुरवे सन्महे मन्त्रधाम्ने
सीतातातो निखिलमददाद्याज्ञवल्क्याय राज्यम् ॥ २०

तस्यौदार्यं स गुरुरधिकं सर्वलोकातिशायि
श्रद्धां भक्तिं निरुपधिभवां चेक्षमाणो हितैषी ।
राष्ट्रं प्रादात् प्रियतनुभुवे तस्य भूयो नृपस्य
ब्रह्मज्ञोऽसौ सुरपतिपदं चापि दातुं समीष्टे ॥ २१

शुद्धाद्वैतं शिवमुपनिषद्वेद्यमाद्यन्तहीनं
पादं तुर्यं त्रिभिरपि पदैः प्राप्यमानन्दसारम् ।
प्राणाधारं प्रणवशरणं सोऽद्वितीयः स्वतन्त्रो
ध्यायन् कुर्वन्नपि च सकलं निर्ममस्तत्र तस्थौ ॥ २२

स्वस्थः कश्चित्तदनु नगरश्रेष्ठिवर्गाधिनेता
स्वाचारस्थः परशिवपरस्तं गुरुं सम्प्रणम्य ।
स्वामिन् भक्ता वयमपि भवत्सेवया लब्धभाग्याः
स्यामेत्युक्त्वा प्रणयमधुरं प्रार्पिपच्चोपहारम् ॥ २३

यश्छात्रेभ्यो द्रविडभणितौ विश्रुतं ग्रन्थजातं
तद्वर्णार्हं तदुचितमठे मङ्गले शान्तिगेहे ।
सत्यं वेद्यं भृशमुपदिशन् मोदमानः प्रसन्न-
स्त्यागी सत्त्वप्रभवविहिताचारनिष्ठो बभूव ॥ २४

तच्छ्रुत्वासौ क्षितिपमधिकोत्कण्ठमाशास्य देयं
प्रार्थ्यं दत्त्वा नृपसमुचितं साक्षतं कीर्तिकल्पम् ।
स्वर्णस्यूतां मणिघृणिभृतां भस्मरुद्राक्षमालां
कौशेयं च प्रणयवचसा सान्त्वयन् स प्रतस्थे ॥ २५

आचार्येन्दुः स्मितशुचिकरः शारदः सुप्रसन्नो
वर्षन् धर्म्यं वचनममृतं खे चरन् पूरिताशः ।
सम्मोदाब्धिं नगरगृहिणामेधयन् सम्प्रतस्थे
कस्याचार्यो न भवति मुदे स प्रियस्त्यक्तसङ्गः ॥ २६

संसेव्याम्बां नगरवणिजः शारदां वाक्स्वरूपां
तत्क्षीराभं मधुरमुदकं स्वामिदत्तं पिबन्तः ।
सद्विद्याप्त्यै नृपतिसदृशाश्चालयं प्रत्यजानन्
शृङ्गे देव्याः परमकरुणां लिप्सवः संविधातुम् ॥ २७

तद्देशस्थः श्रवणकठिनां चामराजस्य दैवीं
रीतिं शृण्वन् स निखिलगुरुर्विव्यथे साधुकीर्तेः ।
तस्य श्रीमानभवदधिकं भक्तिमान् हस्तकल्पः
कल्पक्षोणीरुह इव नृपः प्रत्यहं सर्वकृत्ये ॥ २८

तत्कालार्हं प्रियमपि हितं तन्महिष्यै वचोऽसौ
शान्त्यै दत्त्वा सचिवमुखतस्तत्त्वबोधावबद्धम् ।
अन्तस्तापं सकलमगदङ्कार ईष्टेऽपहर्तुं
स ह्याचार्यो विशदवचसा जायुना मन्त्रजापी ॥ २९

वीक्षस्वेमान् धनदसदृशान् वेदशास्त्रादिशालां
देवागारं विपुलमुदकाधारमारामवाटीम् ।
गोष्ठं श्रेष्ठं सुरभिसुखदं चान्नशालां विशालां
धर्मांश्चान्यान् विरिरचयिषूनम्ब भव्येक्षणेन ॥ ३०

सद्यः सम्पद्भवतु महती भक्तिरास्तां द्विजेषु
श्रद्धा सत्या गुरुवरगिरिप्रश्रयश्चानुरूपः ।
धीः स्वायुष्यं लसतु नगरश्रेष्ठिनामित्युदीर्य
स्वामी यात्रामवददुचितां ताम्रपर्णीं यियासुः ॥ ३१

निस्तद्देशः करधृतफलान् प्राञ्जलींश्छिष्यवर्गान्
मध्येमार्गं स शिवहृदयस्तत्र तत्रानुगृह्णन् ।
चित्रातीरे मुनिजनवरे ग्राममारामरम्यं
गङ्गापूर्वं स्ववशकुशलं जग्मिवान् सप्रमोदम् ॥ ३२

यत्रैतस्मिन् वसति गुरुणा कार्त्तिकेयोपमाने
कुण्डोध्नीनाममृतपयसां तर्णकैः क्रीडमानैः ।
आसीद्बृन्दावन इव गवामुत्सवः प्रेक्षणीयः
स्निग्धालोकैः कवचविधृतैः शुभ्रशङ्खाङ्कफालैः ॥ ३३

विख्यातेन प्रथमगुरुणा चात्र वर्षीयसायं
गङ्गातोयं मधुरसभृतं संप्रयच्छन् वितन्वन् ।
सार्धं ग्रामं नव इव रविः प्रोल्लसेत्यभिज्ञा
विप्राः प्रोचुर्निगमवदनास्तीरमापुश्च नद्याः ॥ ३४

ग्रामोऽगामि प्रथितगुरुणा भास्वता चोद्गामि
प्राज्ञैः प्रापि व्रतियतिपतिः प्रच्छदश्चोदहारि ।
आप्रच्छयाग्र्यं कुशलवचनं संपदा तेन शिष्यैः
सोऽस्ताव्यार्यैः करधृतफलैर्मस्तकन्यस्तहस्तैः ॥ ३५

देवागारं स गुरुरगमत्तत्र जप्यान्यजापीत्
तानप्रीणादमृतपयसा शम्भुमूर्धोद्भवेन ।
ते चानर्चुर्गुरुमभिमतैः श्रद्दधानाः सुमाद्यै
रीतिर्ह्येषा सकलभवरुक्प्राप्तये शास्त्रदृष्टा ॥ ३६

जातो वंशे तदनु विदिते रत्नखेटस्य यष्टुः
सद्वृत्तस्थो मृदुलवचनो हव्यकव्यादिकर्ता ।
ज्ञाता दाता विधिवदुचितं सर्ववृद्धोपजीवी
शान्तः श्रोता निगमगदितस्यार्थजातस्य वाग्मी ॥ ३७

शिष्यैरन्यैः सह नतशिराः शास्त्रिसुब्बार्यनामा
कैलासेशप्रतिममवदद्देशिकं सोपहारः ।
वृष्टिं वार्षीमसुरवदिहावग्रहः शोकहेतुः
संक्लिश्नाति क्रतुहितपयःसोमधान्यादिहेतुम् ॥ ३८

इत्याकर्ण्य प्रियगुरुरथ प्रेप्सितां तत्र शान्तिं
सर्वां चक्रे सदयहृदयः संपदा सद्य एव ॥
छायावृक्षः शमयति नृणामध्वगानां श्रितानां
तापं हर्षं जनयति परं पत्रपुष्पादिदायी ॥ ३९

धर्मः पूर्णः श्रुतिनिगदितश्चेत् सुजुष्टोऽभविष्यत्
वृष्टिः पूर्णा शतमखकृता तूर्णमेवाभविष्यत् ।
तत्सिद्ध्यर्थं भुवनजननी शारदामुं प्रदेशं
वर्षन्तीयं सहजकरुणासंपदं सन्निधत्ते ॥ ४०

साम्बं चित्राप्रभवशिशिरे पर्वतेऽस्मिंस्त्रिकूटे
गङ्गाशीर्षं चमकसहितै रुद्रसूक्तैरथान्यैः ।
वाग्वादिन्या सहितमनिशं मोदयिष्येऽभिषिञ्च-
न्नित्याशास्ति स गुरुरवदद्विस्मयाधायि वाक्यम् ॥ ४१

जातिद्रोणप्रसवसुरभौ रम्यखातप्रतीरे
कैलासेशं कवचितदिशं कान्तिपूर्णाखिलाशम् ।
विद्युद्वल्लीसदृशकिरणां वामदेवादिवन्द्यां
सम्पत्सिद्ध्यै स गुरुरधिकं चार्चदानन्दवल्लीम् ॥ ४२

विप्रानन्यानपि स विसृजन् दूरदेशानुयातान्
राकाचन्द्रप्रतिमवदनः कर्णविश्रान्तनेत्रः ।
प्रत्युद्यातः प्रमदभरितैः शिष्यवर्गैरुदात्त-
स्ताम्रातीरे जपसमुचितं मण्डपं प्राप रम्यम् ॥ ४३

ताम्रा नम्रा प्रवहति नदीयं स्पृशन्ती तरङ्गै-
र्भर्त्राहूता कनकवसनादाननाथेन कान्ता ।
यत्र स्थित्वा मुदमनुभवत्युत्पलाक्षी निकामं
तोये नद्यानयनसदृशान् वीक्षमाणा ह्यघौघान् ॥ ४४

यः कैलासात् स्वयमुपगतो मण्डपो नातिशीत-
स्तम्भैरुच्चैर्धवलमृदुलैः स्फाटिकैः शोभमानः ।
मध्येऽत्युच्चो मृदुतलयुतश्चन्द्रकान्तोपलाढ्यः
कच्चिद्देवः स्वयमपि गुरुः प्रीणयेन्मामिहेति ॥ ४५

छायासंज्ञासदृशगृहिणीनित्यसंश्लिष्टपार्श्वः
सर्वान् मर्त्यान् स्वकरनिकरैर्बोधयन् सप्तसप्तिः ।
लोकाचार्यं स्वगतपुरुषज्ज्येतिरीक्षानुषक्तं
स्वात्मानन्यं स्वयमुपगतं बोधयंश्चाविरासीत् ॥ ४६

एको हंसः शिवनिवसतिः खेचरो ध्वान्तहारी
हंसश्चान्यः करकमलहृत्पद्मवास्तव्यशम्भुः ।
भूसंस्थोऽन्तःस्थितचिरतमःस्तोमहारी सुदृश्ये
रेजाते द्वौ परमसुहृदौ तत्र तीरे तटिन्याः ॥ ४७

शिष्टाचारं स्वयमपि चरञ्जाह्नवीं दाक्षिणात्यां
पुष्पक्षेपैर्भृशमुपचरन् क्षिप्तपुष्पाख्यतीरम् ।
सार्थं तन्वन् करधृतफलान् वीक्षमाणो निकामं
शिष्यस्तोमान् सुरभिमधुरे तत्र नीरे ममज्ज ॥ ४८

स्नातोद्यातः सततमधुरे ताम्रपर्ण्याः स नीरे
गत्वा मन्दं प्रथमकथितं मण्डपं पुष्पकाभम् ।
त्यक्ताकाङ्क्षः कनककपिशप्रोच्चसिंहासनस्थो
विश्वान् पुंसो विकचवदनानालुलोके मुनीन्द्रः ४९

जप्त्वा तस्मिन् मनुमपि समं प्रार्थितः सोपहारैः
शिष्यैः श्रद्धाविनयभरितैः सादरं पूर्णपात्रैः ।
याने मौनी रविरिव रथे ज्ञानकल्पेंऽशुमाली
पूर्वाचारक्रममनुसरंस्तस्थिवान् मित्रमित्रः ॥ ५०

कण्ठे हारं तरलरुचिरं मौक्तिकं ज्ञानकल्पं
रत्नप्रोतं शिरसि रुचिरं कीर्तिकल्पं किरीटम् ।
काये शुभ्रं कपिलवसनं धर्मकल्पं दधानो
विद्याकल्पां करसरसिजे चाक्षमालां चकाशे ॥ ५१

आकैलासादयनमभितः स्नातभस्मानुलिप्तः
शिष्यस्तोमो मुदितहृदयो शीर्षविन्यस्तहस्तः ।
हस्तन्यस्तप्रसवकुसुमो विस्मयोत्फुल्लनेत्रो
यानारूढं गुरुपरिबृढं वन्दमानोऽवतस्थे ॥ ५२

तस्मात्तीराद्रविरिव नवो वेदविद्याधिवासो
ध्वान्तं धुन्वन् प्रतिगृहमुखं साक्षतं निष्कभानुम् ।
पात्रे शुभ्रे सुमफलयुते नालिकेरादिजुष्टे
मूर्तं प्रार्थ्यं ददादिव शुभं संमुखोऽगात् पुरीं सः ॥ ५३

आकैलासप्रथमनगरं मन्दिरद्वारि जुष्टे
दीपैर्दीप्रैः कपिशकुसुमस्रग्भिराम्रच्छदौघैः ।
रामा नम्राः कुसुमशिरसः सद्गुरोः पादपद्मे
चक्रुर्मन्दं स्थिरशुभकृते मङ्गलारात्रिकर्म ॥ ५४

सम्यक् श्लिष्टैः सृतिमुभयतः पादपैरर्जुनाद्यै-
र्दृश्यैः स्पृश्यैः शिरसि विनतैः सूर्यतापापनोदैः ।
श्राव्यैर्नानाविहगविरुतैः स्तोतुकामैरिवार्द्रै-
र्लोकाचार्यं स्वयमुपगतं प्रार्थयामास सा पूः ॥ ५५

आपादान्तप्रणतिमहितैः शालिभिः पच्यमानैः
सर्वं क्षेत्रं कनककपिशं चारुवारिप्रचारम् ।
क्षेत्रज्ञोऽसौ मुररिपुरिव प्रेक्षमाणोऽन्तिकस्थान्
केदारेशो वसति फलदः सर्वदात्रेत्युवाच ॥ ५६

आचार्योऽयं तरणिरधिकप्रीतिरस्मास्वधिश्री-
र्दातुं लक्ष्मीं स्वयमुपगतः पौषदत्तापचित्या ।
तन्मस्तस्य प्रचुरमुचितं पूजनं भक्तिनम्राः
स्वामी क्षिप्रं भवति स पुरा ह्युत्तराशासमुत्कः ॥ ५७

वृद्धैर्गीतं पठितचरितैः श्रीनृसिंहापदानं
शृण्वन् योगी श्रवणमधुरं तत्पदाब्जप्रचारैः ।
पूतं प्रागान्मठमभिनवं श्रीगृहं मन्यमान-
स्तं तत्रस्थं निरवधिशुभाधायिनं स्वात्मरूपम् ॥ ५८

अन्तेवासिप्रियशुभकृते कान्तिमत्यालयस्थं
दोलागेहं शुभकमलिनीशुद्धवातातिपूतम् ।
पूर्णं गन्धैः सततविकसन्मल्लिकाकेतकीनां
कान्तैर्दीपैरुडुपसदृशै राजमानं स भेजे ॥ ५९

विद्योदन्वान् गुरुसुरपतिस्तत्र रम्यैः कटाक्षैः
सौभाग्यश्रीप्रसरसदृशैः कान्तिमत्यम्बिकायाः ।
वर्णाकारामखिलजननीमर्चयश्चन्द्रमौलिं
लिङ्गाकारं कलशजसमो नित्यलक्ष्मीमतानीत् ॥ ६०

मध्येकान्तिप्रचुरजननीरम्यदोलाविमानं
मध्येचन्द्रप्रतिमरजतश्रीविराजद्विमानम् ।
मध्येशृङ्गीकनकविलसन्मण्डपं चन्द्रमौलिं
मध्येपीठं निहितमनिशं सोऽर्चयामास सिद्ध्यै ॥ ६१

विश्वात् स्थूलाद्द्विविधविषयासक्तचित्ताद्विराजः
सूत्रादन्तःप्रभवसुखभुक्तजेसः स्वप्नदेशात् ।
श्रेष्ठं मायासहितमखिलोत्पत्तिहेतुं विदन् स
प्राज्ञं स्वस्मिन् विगलितभिदं चिन्तयन्नास्त योगी ॥ ६२

वासन्तश्रीततिकवचिते मण्डपे पूगरम्ये
देवीक्षेत्रं लसति समया दक्षिणेनेशगेहम् ।
सायं भास्वानिव गुरुरयं प्रार्थितः शिष्यवर्गैः
श्रुत्यन्तोक्तं सकलमवदद्विस्तरेणात्मतत्त्वम् ॥ ६३

कर्णेहत्योपदेशं तं निर्पीय मधुरं वरम् ।
वयः शुकादयोऽप्यासन्निश्चला लिखिता इव ॥ ६४
अवस्तारो हृतस्तर्हि स्वात्मज्योतिर्निरीक्षणे ।
शिष्याणामेकतानानां भक्त्या तमुपशृण्वताम् ॥ ६५

स्वयंप्रभेयं जननी कान्तिमत्यष्टसिद्धिदा ।
प्रकाशयतु सन्मार्गं श्रुतिस्मृत्युदितं श्रियै ॥ ६६

इतीरयन् स्वयंज्योतिःस्वरूपावगमस्थिरः ।
स्थिरागुरुर्दयास्यन्दिलोचनाब्जो ययौ मठम् ॥ ६७

स्त्रैणं पौंस्नं सततमगमत् संजिघृक्षुः प्रशस्तं
तीर्थं गङ्गामधुजलसमं सर्वतापापनोदि ।
ग्रामाद्ग्रामाद्भुवनभिषजः सद्गुरोर्ज्ञानकल्पं
सर्वव्याधिप्रशमनकृते भस्म चानन्ददायि ॥ ६८

एतद्गात्रे भसितमहरत् क्षेत्रियं चोपतापं
देवः ख्यातो ह्यमृतघटधृत् सिद्धधन्वन्तरिः सः ।
पीतं शुद्धं यदपि च पयो वाग्विवृद्धिं वितेने
स प्रायच्छद्भुवनजननीस्तन्यकल्पं पयस्तत् ॥ ६९

श्रौतं तत्त्वं निधिमिव बुधाः पुण्यनिर्धूतपापाः
प्रापुर्देवं शरणमुचितं पत्रपुष्पोपहारैः ।
सौत्रं भाष्यं निगमवचसां सारभूतं गुरो नो
व्याचक्ष्वेति प्रणतशिरसः शान्तिदान्त्यादिवित्ताः ॥ ७०

विद्वांस्तेषु प्रथमगणितः शिक्षिताध्यात्मविद्यो
जातो वंशे सुकृतमहिते श्रीमदप्पय्ययज्वुः ।
क्षीरग्रामाद्बुधजनयुतः प्राप गोपालशास्त्री
वक्ता काव्यात् प्रभृति विविधग्रन्थजातस्य देवम् ॥ ७१

गीताध्यायी मधुरवचसा नित्यमन्नप्रदायी
जातः शुद्धे बहुसवकृतो रत्नखेटस्य वंशे ।
गङ्गाग्रामाद्बुधजनसखो वृद्धसेवी तपस्वी
ज्ञातान्यैश्च प्रणवपरमं प्राप तं देशिकेन्द्रम् ॥ ७२

द्वावप्येतौ सह विविदिषासाधनाचारशीलैः
संख्यावद्भिर्यतिवरवृतं नेमतुर्देशिकं तम् ।
संपप्रच्छ प्रथममुचितं सर्वचर्यासु भव्यं
योगी सोऽपि श्रुतिनिगदिताशेषतत्त्वप्रदीपः ॥ ७३

स्वात्मानन्दप्रभवमधुरस्निग्धगम्भीरघोषो
व्याचख्यौ तामनुभवयुतां सोऽपि वेदान्तविद्याम् ।
सौत्रं न्यायं भृशमनुवदञ्जैमिनीयेन साकं
सन्तोषाय प्रभवति गुरोस्तादृशो ह्यर्थिलाभः ॥ ७४

पुर्यां तस्यां कुसुमविलसद्वीथिकायां महत्यां
संसिक्तायां मधुरपयसा पुष्पवाटीयुतायाम् ।
एवं चिन्वन् स गुरुरखिलं कर्म नित्यं स्वकीयं
शैवीं रात्रीं तदनु सुखदां सार्थयंस्तत्र तस्थौ ॥ ७५

कैलासाभे कनकखचिते मण्डपे प्रोच्चशृङ्गे
चन्द्रग्रावस्फटिकमघवप्रस्तरैर्भ्राजमाने ।
मध्ये दोलागृहमुडुपतिभ्राजिशीर्षं महेशं
पीठे स्वच्छे समणिलसिते मध्यभागे निधाय ॥ ७६

विष्वादित्यौ गजपतिमुखं मातरं चाभितोऽमुं
तत्तत्पीठे विधिमनुसरन्न्यास्थदानन्दसिन्धुः ।
दार्भे कृत्तिप्रयतवसनालङ्कृते स्वासनेऽसौ
भक्तामोदैः सममुपविशन् प्रावृतत् पूजनाय ॥ ७७

भस्म स्मेरं मृदुलधवलं फालपट्टे विशाले
कण्ठे स्फीते कनकविधृतां पीनरुद्राक्षमालाम् ।
काये कान्ते रविकरसमं पूतकाषायवस्त्रं
बिभ्राणं तं शुक इति जना मेनिरे स्वासनस्थम् ॥ ७८

अर्घ्यं पाद्यं कुसुमनिचयं चाक्षतान् शुभ्रशुभ्रान्
दुग्धं सर्पिर्दधि मधु सितं चन्दनं चन्द्रमिश्रम् ।
नानावर्णे महति विशदे भाजने वीक्षमाणः
सोऽन्यच्चापि स्मिततत्तिरुचा द्योतयामास सर्वान् ॥ ७९

साङ्गं रुद्रं चमकसहितं न्यासपूर्वं जपन्तं
साकं विप्रैर्निगमकुशलैः सस्वरैर्भक्तिवश्यैः ।
आराध्यन्तं परमपुरुषं सेचनादिक्रमेण
क्षित्याचार्यं स्तिमितनयनाः प्रेक्ष्य तस्थुर्जनौघाः ॥ ८०

मल्लीजातीवकुलकमलाशोकमन्दारमुख्यैः
पुष्पैः फुल्लैः सह जनमनोनेत्रभावैर्विशुद्धैः ।
भक्तान् सर्वानचलनयनानेकतानान् वितन्वन्
चन्द्रापीडं निटिलनयनं सोऽर्चति स्माखिलेशम् ॥ ८१

आराध्यैवं शिवमतिसृजन् मङ्गलं तत्र पुर्यां
प्रातर्योगी शरवणभवं ताम्रपर्णीप्रतीरे ।
वल्लीसेनासहितममितं पूजयित्वा दरीस्थं
मध्याह्नेऽसौ पुनरपि मठं पादचारी ययौ सः ॥ ८२

शिष्यस्तोमान् पुनरपि दृशा भासयन् विष्टरस्थो
हेमाब्जिन्यास्तटभुवि जितग्लानिरध्यात्मनिष्ठः ।
नूत्नानन्यान् स्वयमुपगतान् बोधयन् स प्रभावं
श्रीवाग्देव्या व्यलसदिह यत्तत् क्षमः कः प्रवक्तुम् ॥

कृष्णस्वामी धनदसदृशस्तत्र कल्याणरामः
सुब्रह्मण्यो बहुवदसखो भक्तिमान् प्राड्विवाकः ।
आचार्यस्य प्रियहितसदालापिनः सिद्धराजः
प्राज्ञैरन्यैः सममपचितिं निःसमां ते वितेनुः ॥ ८४

दत्तात्रेयो मुनिरिव गुरू रत्नरम्यापगायाः
पूते तीरे मलयपवनाधूतमाकन्दबृन्दे ।
ग्रामाद्ग्रामं चिरमधिवसंस्तीर्थपुष्पादि यच्छन्
चित्रारम्ये त्रिककुदि गिरौ रम्यसानावुवास ॥ ८५

श्रेष्ठायास्मै मधु मलयजं चन्दनं चन्द्रमिश्रं
स्वाद्यं शुभ्रं सततमधुरं वारि मन्दानिलेन ।
मन्दाराद्यैः प्रसवनिचयैर्भूमिपीठार्चकाय
प्रादाच्छैलो द्विजवरवरेरातिथेयं सगेयम् ॥ ८६

गीतोद्युक्तभ्रमरमधुरध्वानपूर्णप्रसूने
नानामुक्तामणिगणलसद्वालुकाशोभमाने ।
तिष्ठन् मैत्रावरुणिसदृशः सद्गुरुः पापनाशे
तुङ्गासाम्यं गुरुनिगदितं सोऽस्मरत्ताम्रपर्ण्याः ॥ ८७

तत्र स्नात्वा कनककपिशैः पल्लवैः पादपानां
प्रीत्याहूतः कलशजनिना तापसेन प्रियेण ।
ऊर्ध्वं गत्वा धवलमृदुले प्रस्तरे[1] चन्द्रमौलेः
पूजां सर्वां हृदयसदृशैः स्वच्छतोयैः स तेने ॥ ८८

तत्रायातं पदतलनतं शृङ्गपल्लीशमेष-
स्वामी प्रार्थ्यं तनयसुखदं शासदिष्टं तथान्यत् ।
चक्रे कीर्त्या सह विशदया तीर्थपत्याख्यया च
प्रीता देवी खलु वितनुते वागभीष्टं जनानाम् ॥ ८९

गत्वा ग्रामं विपुलमलकासन्निभं निस्समाभं
नाम्ना लक्ष्म्या प्रथितमवनौ नित्यकल्याणयुक्तम्[2] ।
कृत्वादिश्य प्रथितसरणिं सर्वसम्पत्प्रदात्र्या
मातुर्लक्ष्मीप्रदमपि मनुं सिन्धुदेशं[3] प्रतस्थे ॥ ९०

यत्र स्कन्दो नियतवसतिः शाश्वतानन्दकन्दो
वल्लीसेनासततसहितः कार्त्तिकेयः शरण्यः ।
यत्रायान्ति प्रतिदिनममुं सेवितुं तारकारिं
दिङ्नेतारो नवसुमभृतस्तद्वितीर्णाधिकाराः ॥ ९१

---

1. பாணதீர்த்தம். 2. கல்லிடைக் குறிச்சி. 3. திருச்செந்தூர்.

सङ्क्रीडन्ते सुरयुवतयो यत्र सिन्धोः प्रतीरे
श्रेयःसक्ता रमणसहिता गन्धशैलाभिरामे ।
मुक्ताकारैर्धवलपुलिनैः षण्मुखालोक्यमानाः
साकं गानैः शरवणभवस्तोत्रसम्बन्धिपद्यैः ॥ ९२

पारावारः परिसरगतः शीकरैर्मौक्तिकाभै-
र्हर्तुं क्षारप्रभवमयशः क्षीरभावं च लब्धुम् ।
साकं स्कन्दं स्वकरसदृशैर्यत्र मन्दैस्तरङ्गै-
रास्ते नित्यं सुरगणनुतं वीजयन्नप्रमेयम् ॥ ९३

स्थानीयेऽस्मिन् गुहविलसिते त्रिःस्वतन्त्राभिधाने
ताम्रासक्तिप्रसरसदृशैः सिन्धुराजेन दत्तैः ।
मुक्ताहारैरधिगलममुं राजमानं गुरुः स
प्रीत्यानर्च प्रसवनिचयै रत्नभास्वत्तनुत्रम् ॥ ९४

भक्तः कश्चित् सहजविनयः सह्यजायाः प्रतीरे
पूतेऽत्रेव स्थिरशुभकृते केकिवाहाधिरूढम् ।
नित्यासन्नं दलितदनुजं नाथते सेवितुं त्वां
क्लृप्तागारो भवतु भगवांस्तन्मुदे साभिलाषः ॥ ९५

अत्रेव त्वं लसतु भगवांस्तत्र तीरेऽधिवासं
सर्वत्रास्ते शिवतनुभवो भव्यदायीति वाणी ।
आपृच्छे त्वां पुनरपि भवद्दर्शनायेति चोक्त्वा
शिष्यांस्तेने मुदितहृदयान् मङ्गलाशीर्गिरा सः ॥ ९६

शरवणभव नित्यं सर्वविद्याप्रदातः
सुरपतिरिपुशत्रो रोचते मेऽत्र वासः ।
परसुखमयरूपे गन्धशैले त्वदीये
परमपि तु समुत्कः सह्यजातीरमेतुम् ॥ ९७

गुह तव पदपद्मे सन्नतिं भक्तियुक्तां
तरिमिव महनीयां मन्यमानोऽत्र तीरे ।
भवजलनिधिमग्नानुद्धरन्नाविकाग्र्यो
वससि तव समानः कोऽस्ति देवो दयालुः ॥ ९८

नवनिधिपतिरास्ते त्वत्पितुर्नित्यमित्रं
सकलभुवनबन्धोस्त्वं हरेर्भागिनेयः ।
पदसरसिजमूले रत्नगर्भः समुद्रः
स्वजननिवहरक्षस्त्वादृशोऽन्यः कथं स्यात् ॥ ९९

इति गुहमतिमोदादुक्तिभिर्मालिनीभिः
करवरधृतशक्तिं तं गुरुं मोहिनीभिः ।
अधिकटि रविशोभं निष्प्रवाणिं प्रदीप्रं
स च मृदु पिदधानस्तुष्टुवे सक्तपाणिः ॥ १००

त्वमपि पथि सहायो वर्तमानोऽसमानः
सकलकुशलकृत्ये लोककोशस्य सक्तः ।
भवकरधृतशक्तिः सर्वसम्पत्प्रदायी
स्थिरमिति कथयन् स प्रस्थितोऽभून्महेच्छः ॥ १०१

॥ इति श्रीजगद्गुरुसच्चिदानन्दशिवाभिनवनृसिंहभारतीविजये
पूर्वभागे तृतीयः सर्गः ॥

## पूर्वभागे चतुर्थः सर्गः

---

अथैकदन्तेन युतं षडाननं
श्रिया युतं पङ्कजलोचनं हरिम् ।
गुरुर्नमस्कृत्य सहानुगः क्रमा-
द्ययौ कुरङ्गाकुलसह्यजातटम् ॥ १

विधाय सर्वं शरजन्मनः स्वयं
गुरूक्तिसन्दर्शितरीतिताण्डवः ।
शुभप्रतिष्ठानुगुणं तटस्थितं
गुरुं प्रणम्य क्रमशो न्यवेदयत् ॥ २

श्रीकावेरीं ललितसुभगस्मेरपुष्पोपगूढां
हंसश्रेणीनिनदमधुरामुत्तरेणामृतोदाम् ।
देवागारं शरवणभवावासयोग्यं विशालं
प्राज्ञो दृष्ट्वा स भृशमतुषत् स्कन्दमूर्तिं च रम्याम् ॥ ३

विप्रैः कार्ये परिचितचरैः शान्तिके पौष्टिकेऽसौ
कृत्वा सर्वं निगमवचनैर्वर्त्मना चोदितेन ।
लग्ने भव्ये भृशमभिमतां स्कन्दमूर्तेः प्रतिष्ठां
कृत्वा ध्यायन् मनुमपि शुभं तस्य सम्यक् तुतोष ॥ ४

सर्वत्रास्ते शरवणभवः सानुमत्सूच्छ्रितेषु
स्वर्णक्षोदप्रचयरुचिरे सह्यजायास्तटेऽसौ ।
आरामाणां सरसकदलीभासुराणां मनोज्ञे
पूगैः पुण्यां श्रियमतिसृजन् भाति गङ्गातटाभे ॥ ५

इत्यानन्दप्रसरविसृता काचिदासीद्वदन्ती
विप्राः पेठुर्निगमभणितिं सिद्धसङ्घा जगुश्च ।
कान्तिः काचिन्नवनवशुभा मूर्तिमत्याविरासी-
ज्जीवन्मुक्तः स खलु मनुवित्तां प्रतिष्ठां वितेने ॥ ६

शम्भोर्देवो गुह इव गुहावस्थितस्वात्मनिष्ठः
कृत्वा श्रेष्ठां शरवणभवस्यानुरूपां प्रतिष्ठाम् ।
स्तुत्वा श्रेष्ठैर्निगमवचनैर्निर्जराणां सुसेव्यं
संप्रस्थातुं न्यदिशदनुगानृष्यशृङ्गाश्रमाय ॥ ७

अत्रैव त्वं वस कुलगुरो सर्वविद्याप्रदात-
र्मुग्धानस्मानव च महितादेशवाक्यैः पवित्रैः ।
आभीलं त्वद्विरहजनितं मा स्म भूदाश्रिताना-
मस्माकं त्वित्यभिमतजनैः प्रार्थयामास सोऽमुम् ॥ ८

निःसङ्गोऽसौ वचनमवदत्तं तदा सान्त्वपूर्वं
मोद्विग्नो भूरिह हि वसति श्रीगुरुः कार्त्तिकेयः ।
सर्वाकारः सुरपतिचमूनायकोऽस्मिन् कुमार-
स्तद्वन्दस्व प्रतिदिनममुं शक्तिहस्तं दयालुम् ॥ ९

सह्यस्याद्रेरियमपि सुता साधुशालीनभूता
नालं भेत्तुं तटमपि भवेत् तु किंतु सस्याभिवृद्ध्यै ।
नित्यं भूयादिति हितवचो भाषमाणः स योगी
तस्मै प्रादात् कनककपिशानक्षतान् मङ्गलाय ॥ १०

एवं रम्यं कुशलवचनं ताण्डवो भाष्यमाणो
दूरायातो गुरुमिव गुहं मन्यमानो निवृत्तः ।
यात्रावृत्तं कथयितुमनाः शारदायै च देव्यै
पूर्वाचारक्रममनुसरन् प्रास्थितोदङ्मुखः सः ॥ ११

मार्गे मार्गे विमलयशसा दक्षिणाम्नायपीठ्याः
स्वात्मध्यानप्रवणहृदयस्त्यक्तसञ्चारखेदः ।
कर्णाटानां सुरपुरसमे भासुरे पत्तनेऽसौ
राज्ञ्या श्रद्धानियमपरया पूजितः प्राप हर्म्यम् ॥ १२

सृज्यन्ते स्म स्रजमभिनवां भक्तसङ्घा विचित्रां
सेषिच्यन्ते स्म च शुचि पयः शीतलं पुष्पयुक्तम् ।
चित्रीयन्ते स्म गुरुकरुणालोकनस्वच्छचित्रा
मोक्षन्ते स्म प्रियगुरुवचःश्रीयुता वीतरागाः ॥ १३

अथ गुरुरधिशैलं संवसन्तीं मृडानीं
महिषदनुजहन्त्रीं मातरं नन्तुकामः ।
कविकुलनवबद्धस्वाद्यपद्योपघुष्टां
पुरमतिकमनीयां प्राप राज्ञ्यार्थ्यमानः ॥ १४

पाथःसेकादपगतरजोराजवीथीमनोज्ञां
वीणावादध्वनिमुखरितां वैजयन्तीं धरित्र्याः ।
शैलाग्रस्थक्षितिधरसुताश्रीदवीक्षाप्रवाहां
शेषाद्यार्यप्रमुखविनुतो राजधानीं ययौ सः ॥ १५

भर्त्रा हीनां प्रणतशिरसं चामराजेन्द्रभार्यां
प्रीत्याश्वास्य स्तिमितनयनौ तत्सुतौ भक्तिनम्रौ ।
सोऽन्वर्थाभिः कुशलवसमौ वाग्भिरायुःप्रदाभिः
पीठासीनो गुणगणभृतावन्वगृह्णात् प्रणम्रौ ॥ १६

आयुष्मांस्ते भवतु तनयः कृष्णनामा विनीतः
कृष्णासक्तो विजयसदृशो विश्वविद्यानिवासः ।
भूपोत्कृष्टः सहजसहितः साधुवृत्तो यशस्वी
सत्पत्नीको जनकसदृशो राजशब्दार्थनिष्ठः ॥ १७

पश्यन्त्येनं पतिविरहजं दुःसहं दुःखमीषत्
सोढ्वा धर्माचरणनिपुणा सव्रता सोपवासा ।
दुर्गामम्बां परिचर सदा देवतां तेऽन्वयस्य
श्रेयो नित्यं भवतु नितरां तत्कृपालम्बनेन ॥ १८

भूरक्षायामवहितमना मन्त्रिभिः शास्त्रदृग्भि-
र्धृत्या मेरुर्धिषणधिषणो नीतितन्त्रप्रवीणः ।
आयोद्युक्तो विजितकरणः सत्यकल्याणधर्मा
शेषाद्यार्यः परमकृपया देवताया नियुक्तः ॥ १९

तद्वाक्यस्थो विशयरहितस्ते सुतः सत्यवृत्तः
सत्सोदर्यः सहजविनयः सद्गुरोराशिषायम् ।
शिष्टात् सर्वां भरतसदृशो निःसपत्नां धरित्रीं
राज्यं चैतत् त्रिदिवसदृशं भातु सम्पत्समृद्धम् ॥ २०

धर्माधर्मप्रभवमखिलं साध्वसाधुप्रभेदं
सर्वज्ञोऽसावमितमहिमा निर्मिमीते प्रपञ्चम् ।
तस्योपास्तिः प्रभवति मुदे चन्द्रमौलेर्महत्यै
तत्संसेव्यः प्रतिदिनमतिश्रद्धयायं भवत्या ॥ २१

इत्याभाष्य प्रकृतमुचितं त्र्यक्षरं चोपदिश्य
श्रेष्ठं धार्यं मनुमणिमपि प्रेष्ठसर्वार्थसिद्ध्यै ।
ज्योत्स्नावल्या इव च सदृशोपघ्नवृक्षं निधाय
प्रीत्यादेशं गुरुरथ हितं सम्प्रतस्थे सदैकः ॥ २२

तं शेषाद्रिं प्रथमसचिवं मन्त्रमाणिक्यहारं
धीरं प्रज्ञामथितसकलश्रेष्ठशास्त्रोत्थसारम् ।
प्रज्ञाश्रद्धापरमपि गुरोर्वाचि नानोपहारं
हस्ते वाक्ये मधुरमवदत् सद्गुरुर्वेदसारम् ॥ २३

धीरास्तां ते नवनवभवा लोकतन्त्रे विचित्रे
क्षोणी सूतां भवदभिमतां सम्पदं कामधेनुः ।
प्रावीण्यं ते मनुजनिवहः श्लाघतां तुष्टचित्तो
वेदान्तार्थे मतिरपि सदा भासतां सर्वसारे ॥ २४

इत्याद्युक्त्वा मधुरवचनं मन्त्रिणं तं महेच्छं
शिष्टानन्यानपि च निभृतं तत्तदर्होपदेशम् ।
स्मारं स्मारं करशुकवरस्मेरपद्माक्षमाला-
मम्बां देवीं द्रुहिणमहिलां स प्रतस्थे मुनीन्द्रः ॥ २५

एवं लोकप्रथितमहिमा प्रस्थितः सन् खराब्दे
चातुर्मास्यं प्रथममुचितं राजधान्यां समाप्य ।
सर्वैर्जुष्टं प्रयतमधिकं सेतुतीर्थं निषेव्यं
श्रीशृङ्गाद्रिं गुरुरुपययौ मन्मथाषाढमासि ॥ २६

श्रीशृङ्गाद्रिं पुनरुपगतो हस्तनिक्षिप्तवीणां
वाचां देवीं विकचविपुलश्वेतपद्मासनस्थाम् ।
स्तुत्वा स्तुत्वा स्वकृतचरितं तत्समक्षं निवेद्य
प्रीतस्वान्तः स गुरुरुटजं प्राप्य मोदं प्रपेदे ॥ २७

राजाधीना जगति मनुजास्तस्य वृत्तं चरेयु-
स्तद्भूपालैः प्रयतकरणैर्भाव्यमाचारशीलैः ।
आचारः सोऽप्यखिलहृदयावासदेव्येकदेयो
राज्ञः सून्वोस्तदहमखिलश्रेयसे प्रार्थयेऽम्बाम् ॥ २८

सञ्चिन्त्यैवं कविकुलपतिः स्वागतैः स्वादुपद्यै-
र्भूभृत्सून्वोः स्थिरशुभकृते भारतीं तां स्तुवानः ।
रेजे योगी महितभगवत्पादतुल्यः प्रशान्तः
पूर्वान् धर्मान् सततमवितुं प्रावृतद्धर्मसेतुः ॥ २९

यात्रातः स्वामुटजवसतिं सन्निवृत्तस्य चित्ते
काचिच्चिन्ता भृशमुदभवन्निःसमा स्वाधिकारे ।
श्रौती स्मार्ता नियतसरणिर्न प्रमोदावहास्ते
नाङ्गैः साकं निगमभणितः शिक्ष्यते भूसुरैश्च ॥ ३०

नो गैर्वाणी प्रचरति शुभा भारती शुद्धिहेतु-
र्नो संस्कारक्रम इह परश्रेयसे भाति नन्द्यः ।
नो त्रेतास्ते प्रयतहविषा दीक्षितैर्हूयमाना
नो वर्तन्ते विहितकरणे सद्विजा लोभकृष्टाः ॥ ३१

साहङ्कारा भुवि कतिपये पण्डितंमन्यधुर्याः
सद्वंश्या अप्यपहतधियः किल्बिषेणातिवादैः ।
मन्त्रव्याख्याकृत इव मुदारुन्तुदैर्दुःस्वरौघै-
राम्नायानामिव च सरणिं बाधमानाश्चरन्ति ॥ ३२

बौद्धाक्रान्ता धरणिरशुषद्भारती धर्मसस्या
तत्त्राणायोदभवदवनौ शङ्करः शास्त्रवर्षी ।
तद्भव्योक्त्या वसति कृपया भारती चात्र पीठे
तस्याः शिष्टिर्मयि च निहिताचार्यवर्येण सम्यक् ॥ ३३

धर्मस्यैकस्य रक्षा भवति च समये सर्वलोकस्य रक्षा
तद्गुप्त्यै शास्त्ररक्षा भवति हि सतां साधनावेदनाय ।
सा च श्रद्धैकसाध्या बहुपठितृजनानन्दसम्पत्तिनिघ्ना
तत्संसिद्ध्यै च देवं कथमपि करुणासिन्धुमीशं
[स्तुवेऽहम् ॥ ३४

एवं चिन्ताकुलितहृदयो मौनमङ्गीचकार
प्रेक्षाञ्चक्रे न च परिजनान्नानुमेने च भोज्यम् ।
पूजां तेने परमनुदिनं चन्द्रमौलेर्जजाप
श्रेष्ठं जप्यं भुवनहितकृत् पारिकाङ्क्ष्येकवर्णम् ॥ ३५

को वोपायो य इह धरणिं सत्यधर्माप्तिपद्यां
कुर्यात् का वा भवति रचनायेतिकर्तव्यता स्यात् ।
जेतव्यः स्यात् कथमपि कलिर्योऽयमेनःप्रधानः
शास्ता कः स्यादिति च कलयन् सद्गुरुः सर्वदास्त ॥

एवं कञ्चित् समयमुचितं प्रेक्षमाणः पदाब्जे
श्रीवाग्देव्या मणिगणलसन्नूपुरारावरम्ये ।
सद्विद्याया रचयितुमनास्तत्र सञ्जीवनीं तां
विद्याशालामधिककुतुकः सोऽवतस्थे मुनीशः ॥ ३७

या सञ्जीवन्युचिततनयान् साधुवृत्तान् सुवीत-
प्रज्ञा येषां विगतकलुषा वेदशास्त्रादि विद्यात् ।
आम्नायो यः स्वरविलसितो देवतातृप्तयेऽलं
ये देवाः स्युर्विधिहुतभुजः सर्वसम्पत्समृद्ध्यै ॥ ३८

विज्ञायेत्थं पशुपतिमतिः शारदासन्निधाने
विद्याशालां विबुधविनुतः शास्त्रसञ्जीवनीं सः ।
विप्रैः साकं विधिवदखिलाराधनां तत्र कृत्वा
विश्वक्षेमे दृढतरमतिर्द्राक् तदारब्ध युक्ताम् ॥ ३९

विद्याशालाममरभणितिश्रीनिवासानुकूलां
 प्रकम्प्यैवं नलिननयनं श्रीपतिं रक्षणाय ।
ध्यायन् पाठप्रवचनपटूंस्तत्र तत्र प्रवीणान्
 कृत्वा युक्तान् स्वयमपि पदं वेदशीर्षे प्रपेदे ॥ ४०

ऊदुः श्राव्यं ध्वनिमपि वचस्तर्हि पुंस्कोकिलाद्या
 वन्या नानाकुसुमनिचयं सौम्यगन्धं ववर्ष ।
पुस्फोटास्य स्वयमपि करो दक्षिणो दानशौण्ड-
 श्चक्वाण श्रीद्रुहिणगृहिणीवल्लरीमञ्जुनादा ॥ ४१

सद्य कृत्वा विबुधभणितेर्मन्मथश्रावणेऽयं
 सर्वाचार्यः शमदमधनः शर्मदां पाठशालाम् ।
स श्रीकण्ठं प्रथमसचिवं दक्षिणाम्नायपीठ्याः
 सर्वाध्यक्षं सकलमवदत् कार्मणं शास्त्रिणं तम् ॥ ४२

यः प्रज्ञायां बलरिपुगुरुर्विश्वकर्माथ शिल्पे
 त्यागे कर्णो वरकविकृतौ विश्रुतः कालिदासः ।
विद्यारण्यः सहजसुकृतश्चक्रराजापचित्यां
 भक्तौ नन्दी परशिवसमाराधकः साधुचर्यः ॥ ४३

वर्षैः साध्यं विरचयति यः कृत्यमेकाहसाध्यं
 संस्थानार्हा कृतिविरचना ज्ञायते यस्य सिद्ध्या ।
यत्प्रावीण्यं वसु च बहुलं कोशपूर्णं ब्रवीति
 प्रायो लोके भवति विरलो कृत्यशीलो मनुष्यः ॥ ४४

यो विज्ञानं स्थिरमनुचरन् गां गुरोर्धर्मदोग्ध्रीं
नित्याराध्यां नियमसहितः सौख्यदं प्राप दुग्धम्
आये भूयो मठसमुचिते वेदशास्त्राभिवृद्धौ
यद्विज्ञानं सदृशमपुषत् कृत्यजातं समृद्ध्या ॥

आबाल्यं यो गुरुमनुचरन्नौपवस्तादिधर्मं
नित्यं चिन्वन् मनुमनुदिनं जप्यमावर्तयंश्च ।
विद्याराज्ये सचिवपदवीमुत्तमामेत्य विज्ञो
यात्राकाले विमलयशसा कृत्यजातं वितेने ॥

तस्मिन्नस्मिन् विबुधककुदे निक्षिपन् कृत्यजातं
विद्यादायी गुरुरिति मुदा सूत्रभाष्यादिशास्त्रम् ।
आमध्याह्नं समधिगमयन्नन्तिकस्थान् विनेयान्
नित्यां पूजां नियमसहितो देवतानां वितेने ॥

एवं भाष्यप्रवचनपरो योगमार्गानुषक्तो
बाल्योद्भूतं परसुखमयं नित्यमेकान्तवासम् ।
आस्थायासौ विरजसि पदे निस्तमस्के च तिष्ठन्
जीवन्मुक्तस्थितिमनुभवन्नस्तभेदो जहर्ष ॥

छात्रादीनां निलयभवनं दक्षिणेन प्रसन्ने
तुङ्गातीरे मितहितपयःशीकरासारधौते ।
श्रीवाग्देवीपरमकरुणादृष्टिपातातिचारै-
र्वन्द्यं पुंसां वनमतिशुभं सत्यकल्पं विभाति ॥

तस्मिन् शान्ते गहनविपिने नित्यवासं चिकीर्षुः
स्वात्मारामो विजितविषयः संविवित्सुस्तपस्वी ।
तं श्रीकण्ठं न्यदिशदुटजं ध्यानयोग्यं विधातुं
नामैतस्य स्वयमभिमतं प्राग्गुरोः संवितेने ॥ ५०

शिष्ट्या तस्य प्रियपरिजनः पर्णशालाः स तेने
सर्वोद्देशो विशदमनसां तत्क्षणात् पच्यते हि ।
यत्रारण्ये प्रथममुचिता पद्धतिश्चैकगम्या
जाता प्लक्षक्रमुकपनसब्रह्मदारुद्रुमाढ्ये ॥ ५१

वैकारेषे गतवति कलां पञ्चमीमोषधीशे
देव्याज्ञातो वनमभिनवं पावनं सोऽभिगम्य ।
वाण्या देव्या स्वयमरचयच्चन्द्रमौलेश्च पूजां
कान्तिः काचित्तदनु ववृधे तत्र वाचामभूमिः ॥ ५२

आराध्यैवं शशधरकलामौलिमम्बां च तुष्टो
मध्याह्नेऽसौ निगमवदनान् ब्राह्मणान् भोजयित्वा ।
आलक्ष्मीशं गुरुरपि गुरून् प्राणिसामान्यमित्रं
ध्यायन् रात्रौ मितपरिजनो जागरामास तत्र ॥ ५३

एवं कृत्वा नियमसरणिं पूतपूजां चरन्तं
तत्रारामो मधुमयफलैस्तं मुदानर्च तृप्तम् ।
शाखालीनैः शुकमुखखगैः स्वागतोक्तिं बभाषे
सद्यः फुल्लं कुसुमनिचयं पूजनायाजहार ॥ ५४

सांख्यासक्तं समदृशममुं जाग्रतं सर्वभावे
सर्वाधारे नभसि महति ज्योतिषि न्यस्तचित्रम् ।
मायातीते प्रणवशरणे निर्गतद्वन्द्वभावे
तस्थुर्दृष्ट्वा गुरुमनुचराः स्तम्भिता विस्मिताश्च ॥ ५५

नाचार्योऽथो वचनमवदत्तद्वने मोदमानो
नेक्षाञ्चक्रे परिजनमपि प्राप्तमात्तोपहारम् ।
स्वस्थो भाष्यं स च सकुतुकं प्राब्रवीच्छिष्यवर्गे
स्वाचारेण प्रसितहृदयः केवलं वर्तते स्म ॥ ५६

प्रातस्तुङ्गाहिममयजले पावनेऽसौ निमज्जन्
मन्त्रग्रामं नियतचरितं तत्र तीरे जपंश्च ।
शान्तारण्ये तुहिनपवनाकम्पितानोहकौघे
गच्छन् पश्यन् द्रुमततिलताः सिष्मिये सानुरागाः ॥

दृष्ट्या सिञ्चन् परिसरगतान् पादपान्नम्रकम्रान्
सद्यः कुर्वन् किसलयसुमस्तोमसञ्छन्नपार्श्वान् ।
बिल्वं द्रोणं विकचकुसुमं चाहरन् पाणिना स
स्तुत्वा देवान् पुनरपि शुभां पर्णशालां प्रपेदे ॥ ५८

ध्यानासक्तः सपदि सुमुखो भस्मरुद्राक्षभूषो
मध्याह्नेऽसौ मधुरनिनदैः पक्षिभिः स्तूयमानः ।
अर्घ्यं पाद्यं स्वयमुपहृतैरम्बुभिः पूतपूतै-
स्तन्वन् हृद्यैः कुसुमनिवहैश्चन्द्रमौलिं समार्चत् ॥ ५९

भूभृद्भागे विलसदटवीमध्यभागे विविक्ते
पाषाणे वा शुभतलगते शाद्वले भूमिभागे ।
आसीनः सन् स्वयमभिमते प्रार्थितश्चापि शिष्यै-
रासायाह्नं बहु च कथयन् स्तोत्रमासाम्बभूव ॥ ६०

एवं नित्यं मननपरमो वासुदेवात्मभावो
मज्जन् स्वस्मिन् प्रमदसरसि प्राप्तसम्यक्समाधिः ।
कालं निन्ये विगततिमिरो विस्मृतस्वाधिकारो
मौनी ध्येयः शिवपदरतो देवतानां च सोऽभूत् ॥ ६१

शरीरमाद्यं खलु धर्ममूलं
त्विति प्रवादः परमस्य चित्ते ।
नैवावकाशं महितस्य लेभे
लोकातिगोऽयं खलु मस्करीशः ॥ ६२

मन्त्री श्रेष्ठः सकलकुशलस्तर्हि शेषाद्रिरार्यः
काञ्चित् पत्रीं गुरुवरमहाप्रीतिसम्पादयित्रीम् ।
श्रीकण्ठाय प्रथमसुधिये मङ्गलावेदयित्रीं
राज्ञीप्रोक्तां व्यसृजदधिकालोकनीयां सुवाक्याम् ॥ ६३

आचार्येन्दुं युवनरपतिः सेवितुं सस्पृहोऽस्ति
श्रेयस्तत्या महितजननीभव्यसन्देशवाचा ।
यं राज्यश्रीरनुगुणतमं सन्नता हस्तपद्मे
स्प्रष्टुं वाञ्छेत्युचितसमये श्रेयसे साधुवृत्तम् ॥ ६४

एवं नानावचनरचनां तर्हि सर्वाधिकारी
स्वात्मारामं गुरुमुपगतोऽवाचयद्भव्यपत्रीम् ।
छात्रावासे गुरुमभिमते सन्निधानं ययाचे
कृत्यज्ञोऽसौ स किल विबुधः संविधां वेत्ति सर्वाम् ॥

बृस्यां मृद्व्यां स च शुभमनास्तस्थिवान् मौनिराजः
सन्ध्यानृत्तं स्मरहरकृतं संस्मरन्नूचिवांस्तम् ।
ब्राह्मी ह्येषा स्थितिरनुगुणा श्रीनटेशाज्ञयैव
प्रादुर्भूता कथमहमिमां सन्त्यजेयं यतिः सन् ॥ ६६

तत्ते कार्या युवनरपतेरातिथेयी सपर्या
पूर्वादिष्टा तमिह निवसन् पर्णशालासमीपे ।
यावत् प्रेक्षे गुणमणिखनिं तं युवानं महीपं
तह्र्याजानादिति कृतिपरं शास्त्रिणं तं प्रवीणम् ॥ ६७

इत्यादिष्टो नृपसमुचितं संविधानं वितन्वन्
बैलम्बेऽसौ युवनरपतिं कार्त्तिके चन्द्रसूनोः ।
अह्नि प्राप्तं प्रथमपुरुषः सोपचारं विचित्रे
हर्म्ये वस्तुं मधुरमवदन्मातुरुत्सङ्गकल्पे ॥ ६८

तत्रायमागतजनैः सह शोभमाने
नानासनादिपरिकर्मितचत्वरेऽसौ ।
विश्रम्य किञ्चिदिव भूरि कृतोपचारः
संसेवितुं प्रियगुरुं सहसोपयातः ॥ ६९

अप्यभ्यस्ता कुलसमुचिता देशिकात् साधु विद्या
या ते सूते श्रियमतिहितां भूपसम्राट्पदार्हाम् ।
कच्चिन्माता व्रतयमपरा मोदते ते पटुत्वे
कच्चिन्मन्त्री तव हितवचः सन्ददत्तोषमेति ॥ ७०

कच्चित् क्षेमं युवनरपते सत्यशीलोज्ज्वलस्य
प्राथर्य मात्रा सह सहभुवा चान्वितस्यापि मित्रैः ।
किं विप्रास्ते प्रतिदिनमनुस्यूतमिच्छन्ति सौख्यं
तुष्टा देवाः स्वयमपि दिशन्त्येतदाशास्यमग्र्यम् ॥ ७१

आपृच्छ्यैवं कुशलमखिले राजकीये च वृत्ते
सर्वज्ञोऽसौ वृषसुतसमं नन्दयन् वीक्षणेन ।
हस्ते दत्त्वा कुसुममसमं कुङ्कुमं चाम्बिकायाः
सत्याशीर्भिर्व्यसृजदुटजप्राङ्गणे तं कुमारम् ॥ ७२

लब्धाशास्यो मधुशुभवचस्तस्य शृण्वन्नुदात्तं
प्राप्तानन्दः पुलकिततनुः प्राप हर्म्यं सुरम्यम् ।
दीपैः शुभ्रैर्धवलधवलैः प्रावृतं कम्बलाद्यैः
श्रीवाग्देवीवरगुरुकृपानुग्रहाकारमुच्चम् ॥ ७३

भूपं बालं सुमशरसमं रक्षितुं रक्षणीयं
शिष्टैर्देवैः परिचितचरैः पूजयामास देवीम् ।
श्रुत्वा राज्ञी गुरुवरकृतां यां प्रहृष्येन्नितान्तं
या संदद्यात् सुरभिरिव हितां तस्य सम्पत्तिमग्र्याम् ॥

तीरोद्यानैः प्रसवसुषमैर्नन्दनस्पर्धमानै-
नानाकारैरधिकसुरभौ तत्र हर्म्येऽनुरूपे ।
आस्वाद्याग्र्यं विविधरुचिकं भक्तमम्बाप्रसादं
स्वस्थस्तस्थौ गुरुवरकृतामाशिषं संस्मरन् सः ॥

प्रत्यूषेऽयं श्रवणमधुरैर्मागधानां वचोभि-
र्देवीध्यानप्रसृतधिषणो बोध्यमानः स गीतैः ।
पूतो गत्वा गुरुपरिसरं जाह्नवीसूनुकल्पो
मन्दं श्लक्ष्णं सकलमवदत् सुन्दरं रात्रिवृत्तम् ॥

पश्चाद्भैम्यां त्रिपुरजयिनीपादुकायां सहस्रै-
र्नाम्नां निष्कैः कुसुमसहितैरर्चनां सोऽपि तेने ।
पश्चात्तस्मै व्यतरदुचितं सर्वरक्षाकराख्यं
प्रीत्या देवो मनुमपि हितं प्रत्यवायापनुत्त्यै ॥

लब्ध्वा कल्पं विनयकवचो देशिकोक्तं समस्तं
विद्यालक्ष्मीविजयसदृशं शोभया राजते स्म ।
अस्मिन्नास्ते खलु गुरुपतौ मन्त्रसिद्धिर्महिष्ठा
राजिर्भासामिव दिनपतौ नित्यसिद्धा पवित्रा ॥

श्रीशुद्धात्मन् प्रियगुरुवरानन्तकल्याणहेतो
स्वात्मेत्यन्यानपि जनगणान् सर्वदा मन्यमान ।
विद्यापूर्ण प्रयतमहिमंस्त्वादृशं कुत्र वीक्षे
मामप्यङ्गीकुरु परिचरं चेत्युवाचाथ हौणः ॥

तस्यां रात्र्यामभिनवमहस्तत्र पोताभिधान-
स्तुङ्गास्रोतस्यचलनयनप्रेक्षणीयो बभूव ।
चन्द्राकारैर्भगणसदृशैर्मण्डिते मौक्तिकौघै-
र्देवी यस्मिन् वसति मनुजानुद्धरन्ती भवाब्धेः ॥ ८०

अम्बां ध्यायन्नमृतकिरणे पञ्चदश्यादिमन्त्रैः
पीठं श्रेष्ठं यतिपरिबृढोऽलङ्करिष्णुर्महात्मा ।
तीरे रेजे करसरसिजन्यस्तरुद्राक्षमाल-
स्तीर्णो ह्येष प्रथममुदधेः संसृतेर्लब्धविद्यः ॥ ८१

भूयो नम्रं तरुणनरपं राज्यलक्ष्मीकरार्हं
गन्तुं राष्ट्रं स्वजनसहितं तं गुरुः सोऽनुमेने ।
तस्मिन् याते पुनरपि गुरुः फुल्लहृत्पद्मकोशः
प्रत्यग्ज्योतिष्यनिशमवसत् सच्चिदानन्दरूपे ॥ ८२

तत्राचार्यः स्वयमतिकृपः सत्सु लालाटिकेषु
प्राज्ञो दीनान् विकलकरणान् व्याधितान् भिक्षुवर्गान् ।
यात्रासक्तानुपयमपरान् यायजूकान्नृपालान्
पृच्छंस्तत्तत् सममतियुतोऽलञ्चकारोटजं तम् ॥ ८३

वाल्मीकीयं कविरिव गुरुः काव्यमाद्येतिहासं
नानावृत्तं नवनवमिवालोकमानः पठंश्च ।
वर्षन् दृग्भ्यामधिकमुदकं तत्कथैकाग्रचित्तो
धर्मोच्छ्रायं स गुरुरवदद्राघवस्यान्तराले ॥ ८४

आन्वीक्षिक्यां परमगहने जैमिनीये च तन्त्रे
योगे सांख्येऽप्यथ पिपठिषून् द्वैतिनो वैष्णवांश्च ।
सोऽनूचानः स्वयमुपदिशन् ह्लादयन् प्रीतिपूर्वं
विद्यायोग्यां बहुमतिमपि प्राददाद्योगिराजः ॥ ८५

आबालेभ्यो मुररिपुसमो बालकल्पोऽतिहर्षा-
दाभिक्षुभ्यो मुदितहृदयस्तत्तदर्हान् कृतात्मा ।
धर्म्यान् वादान् श्रुतिषु च कलासूक्तरीत्या ब्रुवाणः
स्वात्मानन्दं परमसदृशं निर्विशन्निर्ममोऽभूत् ॥ ८६

एवं नित्यं सममतिरसौ योगिराजस्तपस्यन्
सर्वो लोकः परमपुरुषे कल्पितस्तज्जलांश्च ।
इत्यत्यन्तं मनसि कलयन्निर्गुणध्याननिष्ठः
प्राप्यां भक्तिं स्वयमधिगतोऽप्याचचारापरां च ॥ ८७

यं यं पश्येज्जगति बहुधा तत्र तत्रात्मभावं
तन्वन् शान्तः स च गुरुधृतां पादुकां वन्दमानः ।
तस्यालोक्यां प्रतिकृतिमपि श्रद्धया नित्यमर्चन्
भक्तान् भक्तेः सरणिमखिलां बोधयन्नास्त तत्र ॥ ८८

आकाश्मीरं गुरुवरनतौ सिद्धिमाशंसमानाः
प्रापुस्तुङ्गावरतटभुवं सोपहाराः पुमांसः ।
आयातांस्तांश्चरणपतितांस्तत्तदिष्टैकहेतुं
न्यायोपेतां सुलभपदवीं सद्गुरूपास्तिमूचे ॥ ८९

त्र्यन्तोक्तिः स गुरुमिति च प्रब्रुवाणा पुमर्थे
शक्ता गीतास्मृतिरपि गिरां तद्वदाद्यं निदानम् ।
शिष्यस्तेऽहं त्विति हितपरा सद्गुरूपास्तिमूचे
तत्कार्योऽयं भवति हि गुरोराश्रयः सर्वसिद्ध्यै ॥ ९०

इत्युक्त्वैतां मनसि भगवत्पादपूज्यस्य युक्तां
पूजां धर्मप्रचयगतये सत्वरं कर्तुकामः ।
प्रारेभेऽसौ महमपि तदा माधवे तज्जयन्त्यां
त्रिप्रस्थानीपठनमपि च स्वर्णयानप्रचारम् ॥ ९१

राधे शुक्लप्रथमदिवसाज्जन्मतिथ्यन्तमेवं
नित्यं कुर्वन्निगमवचसा क्षीरधारादिसेकम् ।
सर्वं तस्य प्रियमुपचरन् सर्वपूजाप्रवीणः
स प्रत्यञ्चं परमपुरुषं तं च मेने सदैकम् ॥ ९२

आम्नायोक्तेः प्रमितिमथ चापौरुषेयत्वमस्याः
स्मृत्यादीनां तदनुगुणतां देवतातत्त्वबुद्धिम् ।
षड्दर्शिन्या विवरणमपि ज्ञानगम्यां च मुक्तिं
श्रुत्या युक्त्या बहु गुरुरसौ निर्ब्रुवन् सार्थ आस ॥ ९३

काश्मीरेषु हिमाचले सुरधुनीतीरे च मद्रेष्वपि
प्रख्याते मधुरापुरे रविसुतातीरे त्रिलिङ्गेष्वपि ।

लोकाचार्यमहोत्सवः समभवत् सच्चिद्गुरोर्ध्यानतः
प्राज्ञोपक्रममेव सर्वमवनौ कृत्यं प्रशस्त्यै भवेत् ॥ ९४

इति श्रीजगद्गुरुसच्चिदानन्दशिवाभिनवनृसिंहभारतीविजये
पूर्वभागे चतुर्थः सर्गः

---

## पूर्वभागे पञ्चमः सर्गः

---

वराक्षमालाशुकवल्लकीसुधा-
घटादिसंशोभितपाणिपङ्कजाम् ।
नमामि देवीं भुवनादिसृष्टिकृ-
द्विधातृसङ्कल्पमयीं सरस्वतीम् ॥ १

श्रीशङ्करस्य जगतीतलदेशिकस्य
जन्मोत्सवस्य महती तिमिरापहन्त्री ।
लक्ष्मीर्विधोरिव ययौ ककुभः समाख्या
तापापनोदनपटुः सहजा जनानाम् ॥ २

सन्मालव्यस्तां विदन्नौत्तराहो
विद्वान् वाग्मी धर्मशीलो धनाढ्यः ।
वाराणस्यां विश्वविद्यालयाख्यां
कांचिच्छालां निर्मिमाणो बभूव ॥ ३

अत्रच्छात्राः कोटिशः प्रार्थयन्ते
निर्मातुं त्वां पाठशालां यतीन्द्र ।
तिष्यप्रोत्थामंहसामुग्ररीतिं
दूरीकर्तुं पुण्यलक्ष्मीं च दातुम् ॥ ४

संसत् काचित् स्थापनीया बुधानां
यादर्शः स्याद्वैदिकीनां कलानाम् ।
चातुर्वर्ण्ये तत्तदर्हां विशिष्टां
रीतिं शिष्टैर्या वदेन्निष्कलङ्काम् ॥ ५

तत्सौकर्यं साधयामः पवित्रं
यानं किञ्चित् कल्पयामश्च यान्त्रम् ।
येन स्वामी शक्नुयाच्छीघ्रमेतुं
काशीं पूतो नित्यधर्मं चरंश्च ॥ ६

मार्गे मार्गे कल्पयामो निकाय्यं
यः साधुः स्यात् पूजने चन्द्रमौलेः ।
दुग्धं पुष्पं पल्वलं शुभ्रनीरं
यस्मिन् सर्वं स्याद्गुरोर्मोदहेतुः ॥ ७

आस्माकीं तामर्थनां देशिकेन्द्रः
कृत्वा साध्वीं शुद्धगङ्गाप्रतीरे ।
धूत्वा मोहं स्वात्मविद्याप्रकाशं
दत्त्वा श्रौतीं स्थापयत्वत्र रीतिम् ॥ ८

लक्ष्मीजानी रक्षितुं धर्ममार्गं
शक्तिं स्वस्थामद्भुतामाददानः ।
भित्त्वा शत्रून् सेतुभेत्तॄन् महात्मा
विष्वक्सेने वेदलक्ष्मीं हि देवः ॥ ९

मायातीतो धूर्जटिर्व्युप्तकेश-
स्त्यक्तक्लेशो वेदमार्गं महेशः ।
आवीद्धर्मं सूत्रभाष्यादि तन्वन्
सर्वज्ञानामेष एव स्वभावः ॥ १०

नित्यं भासा सप्तसप्तिः समस्तं
ध्वान्तं धून्वन् लोकचक्षुर्जनानाम् ।
स्वं स्वं मार्गं दर्शयन् भाति सुस्थः
पर्यायेण स्वात्मभासा चकास्ति ॥ ११

यात्रा चासीत् पूर्वमुद्दिश्य काशीं
स्थाने सा स्यात् सद्गुरोरस्मदिष्टा ।
नावाप्तव्यं किञ्चिदास्ते यतीशः
शिष्याशास्ति साधुकृत्यां विनान्यत् ॥ १२

श्रेयोमार्गं यो विजानाति सम्य-
ग्यस्मिन् मार्गे सञ्चरन्तो मनुष्याः ।
श्रद्धायुक्ता विन्दते स्वं स्वमिष्टं
तत्सर्वज्ञं त्वां वयं संश्रयामः ॥ १३

एवंरूपां पत्रिकां कृष्णशर्मा
दत्तात्रेयो लग्नको मैथिलानाम् ।
आदाय श्रीसद्गुरोः पादपद्मे
नत्वा रीतिं विस्तरेणाचचक्षे ॥ १४

स्वादुङ्कारं तेन चोक्तं समस्तं
शृण्वन् योगी क्षेममापृच्छते स्म ।
भक्तिं सत्यां विश्वनाथे विशाल-
श्रीयुक्ताक्षीनित्यसंश्लिष्टगात्रे ॥ १५

काशीक्षेत्रे जाह्नवीवातपूते
क्षेमं स्वास्ते तस्थुषां मानवानाम् ।
किं स्यात् कृच्छ्रं पादसञ्चारपूते
श्रेष्ठे देशे शङ्करस्यादिमस्य ॥ १६

अन्वग्भावं प्राप्तवानप्युदारो
यात्रां कर्तुं सन्दिदेहातिपूतः ।
पूर्वाचारं वैदिकं स्वं विहातुं
सद्यः किं वा शक्नुयात् स प्रवीणः ॥ १७

नायं धर्मो वाहनारोहणादिः
शिष्टैर्जुष्टस्त्यक्तकामैर्महद्भिः ।
आद्यो देवो देशिकः पादचारी
धर्मास्तत्र तत्र तत्रामितौजाः ॥ १८

विद्यारण्यो याप्ययाने प्रयाणं
चक्रे मौनी चन्द्रमौल्याज्ञयैव ।
श्वेतं छत्रं चामरे चातिशुभ्रे
दन्ती वाजी तस्य लिङ्गानि चेशः ॥ १९

तद्भक्तस्याप्येवमाचार आसी-
द्विद्यारण्याद्योगिनः पूज्यपादात् ।
प्रारभ्यासौ वेदभाष्यप्रवक्तुः
स ह्यादर्शो राजतेऽस्यासमानः ॥ २०

पूर्वेणासौ देशिकेन्द्रेण भारो
न्यस्तः शीर्षे धर्मकृत्ये प्रजानाम् ।
तस्यादेशं संवहन्नत्र शैले
वर्ते क्षेमं सम्यगाशंसमानः ॥ २१

दुःसञ्चारस्तत्र मार्गो जनाना-
मस्ति क्लिष्टो धर्मशालादिहीनः ।
शुद्धां यात्रां यद्ययं संविदध्या-
च्छम्भुर्देवः सर्वमिष्टं विदध्यात् ॥ २२

यद्याशेषे पादुकाद्वन्द्वमेत-
न्नित्याभ्यर्च्यं सद्गुरोः सङ्गृहाण ।
राज्यं सर्वं सम्बभार प्रदत्तं
रामेणैवं पादुकाद्वन्द्वमेव ॥ २३

पूज्ये स्थाने तत्र विन्यस्य चैतत्
सर्वं कृत्यं प्रक्रमस्वानुरूपम् ।
श्रद्धा स्याच्चेत् सद्गुरोर्वाचि नृणां
सम्पद्येत श्रेयसे सर्वकृत्यम् ॥ २४

काश्यान् ब्रूयाः सत्तपस्यां मदीयां
वृद्धिं विन्देत् पाठशाला तदीया ।
इत्युक्त्वासौ शारदायाः प्रसादं
दत्त्वा क्षौमं पादुके चान्वगृह्णात् ॥ २५

भूहाराभां स्वर्धुनीं पूतपूतां
नित्यस्रोतोभासुरां सेवितुं मे ।
वाराणस्यामन्नपूर्णां च वाञ्छा
श्रीविश्वेशं कामनास्ते पवित्रा ॥ २६

मुक्तिक्षेत्रे केवलं गाङ्गमम्भः
पीत्वा स्थातुं वर्तते मेऽभिलाषः ।
नाह्नायाहं त्यक्तुमीशे तथापि
श्रीगुर्वाज्ञां मौलिसंक्षालनीयाम् ॥ २७

तिस्रो यस्मिन् पूतपूतास्तटिन्यः
सङ्गच्छन्ते मुक्तिदाश्च प्रयागे ।
कृत्वा यस्मिन्नध्वरं यायजूका
यूपस्तम्भं चक्रिरे व्योमयानम् ॥ २८

देहत्यागे सङ्गमे सिन्धुपत्न्यो-
मुक्तिं प्राहुस्तत्त्वबोधं विनैव ।
पूते तस्मिन् क्षेत्रभागेऽभिलाषो
भूयो वस्तुं निर्जने सात्त्विके मे ॥ २९

कृष्णं द्रष्टुं नीलमेघाभिरामं
लीलालोलं वेणुगानाद्दतोष्ठम् ।
वाञ्छा नित्यं सूर्यकन्याप्रतीरे
रत्नै रम्यै रैवतस्थैर्विचित्रे ॥ ३०

बृन्दारण्ये शौरिसञ्चारपूते
योगस्थाने मुक्तिपुर्यां बदर्याम् ।
श्रीगोविन्दं सच्चिदानन्दकन्दं
धर्मासक्त्यै प्रार्थयेऽहं जनानाम् ॥ ३१

दत्तात्रेयं तं नमन्तं पदाब्जे
प्रीत्यालोकैः साधुवादैः प्रशस्तैः ।
धर्माकूतं व्याहरन् सान्त्वयन् स
प्रेष्ठो योगी प्रेषयामास तुष्टम् ॥ ३२

एवं तत्स्थः क्षेममाशंसमानो
धर्मोच्छ्राये चन्द्रमौलिं समर्चन् ।
स्वे स्वे धर्मे वर्तनं चागतानां
श्रेयोवृद्ध्यै साधनं व्याजहार ॥ ३३

एवं सिद्धोऽधित्यकायां कदाचि-
 द्योगारूढो मक्षिकाच्छिन्नसक्थिः ।
तत्स्थानोत्थासृक्प्रवाहानुलिप्तः
 सन्द्रष्टॄणां योगशब्दार्थमूचे ॥ ३४

एवं मौनी पुष्पवत्तुल्यकान्ति-
 रासायाह्नं सञ्चरन्नेककः सः ।
दृष्ट्या तुष्टान् वैपिनान् प्राणिवर्गान्
 कृत्वा स्थाने वर्तते स्म प्रशान्तः ॥ ३५

व्याघ्रोऽनंसीद्व्याघ्रचर्मासनस्थं
 सर्पाश्चेरुः सन्निकृष्टाः प्रशान्ताः ।
वृक्षस्तोमश्चास्तवीत्तं स्वनिष्ठं
 पक्षिध्वानैः सर्वभूताशयस्थम् ॥ ३६

द्वन्द्वं जित्वामन्मथाब्दात्तपस्यन्
 शृङ्गे तस्मिन्ना च पाराभवाब्दात् ।
सन्यासिभ्यस्त्रिः स भाष्यं बभाषे
 श्रद्धावद्भिः साकमन्यैर्युतेभ्यः ॥ ३७

एवं तस्मिञ्छासति स्वात्मनिष्ठे
 द्वित्रिर्भूयो लाभ आसीद्धनानाम् ।
कीर्तिः पीठ्या व्यानशे सर्वदेशा-
 न्नागुः शिष्या वन्दितुं देशिकं तम् ॥ ३८

आद्यं देवं शङ्करं देशिकेन्द्रं
जन्मक्षेत्रे वैदिकस्याभिवृद्ध्यै ।
धर्मस्यैच्छत् स प्रतिष्ठाप्य नन्तुं
गुर्वर्चा हि प्रोच्यते धर्ममूलम् ॥ ३९

तत्सङ्कल्पप्रोच्चवृक्षाश्रिताङ्गी
श्रद्धासेकप्राप्तशोभानवद्या ।
सत्यस्तोत्रश्रीमदम्लानपुष्पा
लेभे वृद्धिं शाङ्करी भक्तिवल्ली ॥ ४०

तामाधातुं धर्मवृद्ध्यै फलाढ्यां
जन्मक्षेत्रं प्रावृतत्तस्य वेत्तुम् ।
शेषाद्यार्यं चापि तत्र न्ययुङ्क्त
प्राज्ञस्तस्य श्रीगुरोः पाणिरेषः ॥ ४१

चिह्नैः प्रत्नैर्माधवाचार्यगीतै-
स्तद्देशोक्तैश्चापि पूर्णातटस्थैः ।
ज्ञात्वा क्षोणीं जन्मनो देशिकस्य
प्रत्यावृत्तस्तं च सर्वं स ऊचे ॥ ४२

वल्लीगुल्मैः पन्नगैः कण्टकौघै-
राक्रान्तां तां शङ्करस्य स्थलीं सः ।
रामः सीतामाञ्जनेयादिवासौ
ज्ञात्वा क्षिप्रं तां करस्थां च मेने ॥ ४३

तस्मिन् धीरे कीर्तिमात्रावशेषे
तत्रायातं श्रीनिवासं मखीन्द्रम् ।
स प्राहैषीत् सद्गुरुः कार्यशेषे
रीतिर्ह्येषा सात्त्विकी तादृशानाम् ॥ ४४

अत्युत्कण्ठस्यापि तस्यातिपूते
जन्मक्षेत्रे शङ्करस्याभिषेके ।
सिद्धस्यास्य द्वादशाब्दी विशाला
निःसङ्गस्याप्येकवर्षोपमासीत् ॥ ४५

यश्चाधीती पाणिनीयादितन्त्रे
विद्वद्वन्द्यात्त्यागराजाध्वरीन्द्रात् ।
अन्यादृक्षो देववाणीप्रयोगे
सत्साहित्ये श्रौतविद्याप्रचारे ॥ ४६

यस्तद्देश्यैर्धर्मराजार्यमुख्यैः
पूर्णातीरे कालटीक्षेत्रभागे ।
भक्त्या चक्रे शं वहन्तीं जयन्तीं
देवस्य श्रीशङ्करस्याभिरूपाम् ॥ ४७

पत्रीं रम्यां ब्रह्मविद्याभिधानां
यश्चाशीर्भिश्चारयामास धीरः ।
निस्तन्द्रीकः सद्गुरोः कीर्तिकल्पां
सोऽपि प्राप ख्यातिमूर्तिं प्रशस्याम् ॥ ४८

सत्यप्येवं सच्चिदानन्ददेवो
भूयो भूयः क्षेममुत्प्रेक्षमाणः ।
तस्थौ देवीं चन्द्रमौलिं च देवं
स्वोद्देशेऽस्मिन् प्रार्थयन्नानुकूल्यम् ॥ ४९

श्वःश्रेयस्यं कर्म चैवं चरन्तं
विद्यार्थी सन् रामचन्द्रः प्रशस्तः ।
धीरोऽदृष्टप्रेरितस्तं ननाम
स्वच्छा विद्या सद्गुरूपास्तिहेतुः ॥ ५०

योऽयं लेभे प्राड्विवाकाधिकारं
वञ्चिक्षोण्यां पद्मनाभस्य भक्त्या ।
पश्चात्तद्वच्छ्रेष्ठकर्णाटराज्ये
स्थानं लेभे चण्डिकानुग्रहं च ॥ ५१

यः शेषाद्रेर्मन्त्रिणो नित्यमित्रं
शुद्धस्वान्तः सत्कथावावदूकः ।
त्यागी शान्तः सद्गुरोर्लब्धमन्त्रः
पूर्वाभाषी साधुवृत्तः प्रवीणः ॥ ५२

तं विख्यातं सत्सखं मन्त्रनिष्ठं
विद्यावन्तं सञ्चचक्षे मनःस्थम् ।
यावत्तावत् सोऽपि सन्तोषपूर्णः
स्वीचक्रे तत्कृत्यमुत्साहयुक्तः ॥ ५३

आरभ्यासौ मन्मथाब्दात् प्रवृत्तो
जिज्ञासायां वेदशीर्षोदितस्य ।
तत्त्वस्यासीत् सद्गुरोः शुद्धचित्तो
लभ्या पुण्याद्देशिकोपास्तिरेवम् ॥ ५४

सन्दर्भेऽस्मिन् देशिकेन्द्रप्रसादात्
सत्योत्साहो माधवः पारिषद्यः ।
प्रीत्याहूतो वञ्चिराज्याधिपेन
प्राप श्रेष्ठं मन्त्रिणः स्थानमर्थ्यम् ॥ ५५

सीतां देवीं प्रेप्सतो राघवस्य
श्रेष्ठो वायोः सूनुरर्कस्य च द्वौ ।
सत्साहाय्ये प्राप्तवन्ताविवैतौ
तस्याप्यास्तां माधवो रामचन्द्रः ॥ ५६

आचार्योक्तं साधु हैय्यङ्गवीनं
वेदक्षीरोद्भूतमच्छं सुगन्धि ।
यन्मध्यस्थं तत्त्वलेह्यं पिबन्तो
निर्मुच्यन्ते संसृतेः शिष्यवर्गाः ॥ ५७

द्वावप्येतौ पुण्यलब्धाधिकारौ
श्रद्धावन्तौ सद्गुरोर्वाचि नित्यम् ।
गुर्वादेशं स्वादमानावभूतां
भूयोवृद्धिं नित्यमाकाङ्क्षमाणौ ॥ ५८

स श्रीकण्ठो रामचन्द्रो यशस्वी
योगीशाज्ञारम्यपाथेययुक्तः ।
वञ्चिक्षोणे राजधानीं समागा-
द्दृष्ट्याहूतः पद्मनाभस्य रम्याम् ॥

तत्रामात्यं माधवं राजमान्यं
दृष्ट्वा स्वस्थस्तत्कृतेनार्हणेन ।
भूपं धर्म्यं मूलकं कृष्णकल्पं
वीक्षाञ्चक्रे तेन साकं स रामः ॥

पृष्टः क्षेमं तेन राज्ञा निकामं
स श्रीकण्ठः श्रायसेन प्रहृष्टः ।
हस्ते प्रादान्नित्यलक्ष्मीनिवासे
गुर्वाशीर्भिः शारदायाः प्रसादम् ॥

धृत्वा फाले भूपतिस्तं विशाले
सत्काश्मीरं मूलकोऽमूल्यरत्नम् ।
गुर्वादिष्टं मन्यमानः स्वकृत्यं
भूयः कृत्ये प्रावृतत् सद्य एव ॥

धीरोदात्तस्याज्ञया भूपतेः स
प्राज्ञो भृत्यै राजकीयैः समेतः ।
पूर्णातीरं प्राप विज्ञानकल्पं
पुष्पस्तोमैः पूजितं देवताभिः ॥

यस्मान्मृत्स्नां मङ्गलार्थं हरन्ते
संचस्कार श्रीगुरुर्यत्र शुद्धाम् ।
स्वात्मानन्यां मातरं निर्विकल्पः
सत्याभाषी सत्यधर्मा यतीशः ॥ ६४

यत्रस्थायां स्वर्गगङ्गासमायां
पूर्णानद्यां स्नान्ति काले मनुष्याः ।
अध्यास्ते यद्वासुदेवोऽम्बुजाक्षो
गीतावक्ता सारथिश्चार्जुनस्य ॥ ६५

यत्रासन्नं छात्रगेहं यतीशो
नित्यं पूतं भाष्यशान्त्यादियोग्यम् ।
जन्मक्षेत्रं माधवो यं बभाषे
देवस्य श्रीशंकरस्य प्रशस्तम् ॥ ६६

आगोपालं जन्मभूमिं गुरोर्यां
गायन्त्युच्चैर्मानवाः केरलीयाः ।
किं भूयोऽन्यल्लक्षणं वस्तुसिद्धे-
र्निःसन्देहः सोऽपि जज्ञे प्रवीणः ॥ ६७

दुष्टाक्रान्ता क्षोणिरेषा कथं स्या-
द्वश्या राज्ञः शासनं दुर्निवारम् ।
मुक्त्वेत्येष प्राज्ञ आसीत्तदानीं
ध्यानासक्तः श्रीगुरोः शंकरस्य ॥ ६८

यस्मिन् क्षेत्रे प्राक्तनी शिल्पिशक्ति-
श्चिह्नं चास्ते पण्डिताभ्यूहनीयम् ।
स्वीकृत्यैतत् पालनीयं प्रयत्ना-
दित्याज्ञासीत् सार्वभौमस्य तर्हि ॥ ६९

अस्त्रैः सार्पैर्भ्राम्यतोर्दाशरथ्योः
स्वास्थ्यं कर्तुं गारुडी ह्यास शक्तिः ।
ज्ञात्वा चैतां मूलको रामवर्मा
प्राज्ञोऽशात्त मन्त्रिणं कर्तुमिष्टम् ॥ ७०

तस्यादेशात् क्षिप्रकारी स मन्त्री
वित्तैर्युक्तैस्तां क्षमां स्वीचकार ।
सर्वामुर्वीं तामथ स्वस्थचित्तो
राजा प्रादाद्देशिकस्योपहारम् ॥ ७१

क्षोणीदायी भूपतिः स प्रहृष्टः
कृत्वा मुद्रां राजकीयां च पत्रे ।
सद्यः प्रादात् सद्गुरुप्रीतिपात्रं
पत्रं बुद्धिस्तस्य राज्ञो नवैव ॥ ७२

भूपः प्रादात् सद्गुरोरालयार्थं
भूयो भूयो वित्तमानन्दनिष्ठः ।
श्रद्धा भक्तिर्दातृता सत्यवाणी
क्षान्तिस्तुष्टिस्तस्य सर्वा स्वसिद्धा ॥ ७३

देशे तस्मिन् द्योतते पद्मनाभो
लक्ष्मीजानिर्भक्तसर्वस्वदायी ।
विद्यादाता शंकरो देशिकेन्द्र-
स्तत्तद्भक्तो मूलको भूमिपालः ॥ ७४

स श्रीकण्ठोऽमोमुदद्राजदत्तं
सर्वं गृह्णन् प्राभृतं श्लाघनीयम् ।
भूपादेशं चिन्तयन् भूरिकृत्यं
तस्यौदार्यं श्लाघमानः प्रतस्थे ॥ ७५

देव्यास्थान्यां सद्गुरोः पादमूले
सर्वं वृत्तं सादरं सप्रणामम् ।
स श्रीकण्ठो विस्तरेणाचचक्षे
राज्ञः पत्रं चार्पयत् कीर्तिकल्पम् ॥ ७६

श्रुत्वा सर्वं देशिकस्तच्च वृत्तं
दृष्ट्वेवाद्यं शंकरं योगिराजम् ।
स्वस्योद्देशं मन्यमानश्च सिद्धं
सन्तोषाब्धौ निस्तरङ्गे ममज्ज ॥ ७७

श्रीवाग्देवीसम्मतिं चाप्यनुज्ञां
ज्ञात्वा योगी भव्यसूक्ताद्यभिज्ञः ।
यात्रां कर्तुं निश्चिकायाथ काले
माघे शुक्ले सर्वसम्पन्निदाने ॥ ७८

श्रीकालट्याः कृत्यजाते विशिष्टे
 साध्वाचारं रामचन्द्रं मुनिः सः ।
मन्त्रं श्रेष्ठं गारुडादिप्रशस्तं
 दत्त्वा गन्तुं साक्षतं तं शशास ॥ ७९

पुंसां पूर्णा श्रीगुरोः स्यात् कृपा चेत्
 किं दुःसाधं सम्भवेत् किं दुरापम् ।
तत्ते धार्या रत्नमालेव साध्वी
 चातुर्वर्ग्यं या सुवीताभिनन्द्यम् ॥ ८०

यात्रोद्युक्ते रामचन्द्रे सुलग्ने
 काष्ठाः सर्वाः सुप्रसन्ना बभूवुः ।
रेजुर्दीपाः सन्निधौ देवतायाः
 सर्वं भव्यं दर्शयन्तः सुवर्णाः ॥ ८१

यावत् सोऽगात् पत्तनं मङ्गलाख्यं
 तावत्तस्थौ कृष्णराजश्च तस्मिन् ।
तं राजानं रामचन्द्रो यथावत्
 सर्वं प्रोचे कालटीयं च वृत्तम् ॥ ८२

कर्णाटानां भूपतिर्मोदपूर्णः
 सिद्धेशं तं द्रष्टुकामोऽथ पत्रीम् ।
शृङ्गक्षेत्रं मङ्गलाद्यामि याव-
 न्मात्रा भ्रात्रा जाययेति व्यलेखीत् ॥ ८३

एतं लेखं तर्हि सर्वाधिकारी
हर्षारूढो न्यास्थदग्रे गुरोः सः ।
तं चालोक्य श्रीयुतः सत्यकामो
मेने यात्रां सिद्धिदोग्ध्रीं तदैवम् ॥ ८४

राजा ब्रूते स्वागमं कृष्णपक्षे
यात्रा चैषा शुक्लपक्षेऽत्र पूर्वम् ।
स्थानादस्मात्तां विनिर्णीतपूर्वां
कृत्वा शान्तागेहिनः सन्निधौ स्याम् ॥ ८५

एवं चेत् स्यात् संगतं तत्स कुर्या-
च्छ्रीवाग्देवी युक्तमेतद्विदध्यात् ।
इत्यालोच्य श्रीगुरुर्व्याहरस्तं
पत्रीं सद्यः प्रेषयामास राज्ञे ॥ ८६

तामायातां पत्रिकां कृष्णराजो
मातुः प्रीत्यै वाचयामास नम्रः ।
पत्रीवाक्यास्वादतुष्टाथ राज्ञी
देवीं चित्ते चिन्तयामास सम्यक् ॥ ८७

स्तुत्वा देवीं भार्गवे वासरेऽथ
प्रातः सर्वं चाह्निकं संविधाय ।
शम्भोर्लिङ्गं सद्गुरोश्चापि बिम्बं
हस्तेकृत्वा स प्रतस्थे यतीन्द्रः ॥ ८८

देव्याः समक्षं भृशमाकुलोऽसौ
तस्थौ तदालोकनसक्तनेत्रः ।
स्विन्नं तदाभूत् सकलं च गात्रं
दुद्राव नेत्रादपि तस्य वारि ॥ ८९

उपक्रमं सोऽथ ततान देव्या
नवालयं कर्तुमपीष्टकाभिः ।
वेदात्मभूमास्ति परः स आसी-
दाचार्यकृत्यं सकलं तदेव ॥ ९०

ततो मठस्था मनुजाः प्रवीणाः
सन्नेहुरस्मिन् गमने सहायाः ।
निक्षिप्य चित्तं स गुरोः पदाब्जे
दध्यौ पुनर्मातरमब्जहस्ताम् ॥ ९१

नम्राञ्शिष्यानमृतसरसैः सान्त्वयन् वाक्प्रचारै-
स्तेषां क्षेमं शुभपदपदे प्रार्थयन्नम्बिकायाः ।
गेहे गेहे प्रियजनकृतामर्चनां चाददानो
नित्यानन्दः स गुरुरतुषच्छात्रसम्पत्समृद्ध्यै ॥ ९२

तस्याकूतं भुवनसुखदं निर्जराश्चिन्तयन्तो
मन्दारादिद्रुमसुमचयं सूचकं मङ्गलानाम् ।
सान्द्रं सार्द्रं तदनु समये गन्धपूर्णं ववर्षु-
स्तद्यात्रा हि त्रिभुवनतलक्षेमसम्पत्तिहेतुः ॥ ९३

अस्माच्छैलाज्जलदपटलो दक्षिणाशाप्रवृत्तः
सिञ्चन् सारं धरणिमखिलां सस्यपूर्णामवन्ध्याम् ।
आतन्वानश्चरतु सुभगो मोदमानस्तडित्वा-
नित्याचख्यौ मुनिमभिमुखं चर्ष्यशृङ्गं मुनिः सः ॥ ९४

॥ इति श्रीजगद्गुरुसच्चिदानन्दशिवाभिनवश्रीनृसिंहभारतीविजये
पूर्वभागे पञ्चमः सर्गः ॥

## पूर्वभागे षष्ठः सर्गः

---

अथाग्रहारं सविधस्थितं गुरुः
समेयिवान् कञ्चिदुदात्तमानसः ।
विधुश्च जीवातुरतिप्रमोदतो
मनुष्यबृन्दैरुदियाय तत्क्षणम् ॥ १

विधाननिष्पादितदानभासुरो
विधिप्रियापादसमर्चनापरः ।
विनम्रमूर्धात्र गुरोः पुरः प्रभुः
विदन् सहस्राधिकमार्पिपद्धनम् ॥ २

शुभं समस्तं भवतो भवेद्ध्रुवं
रतिश्च धर्मे विधिचोदिते सदा ।
मतिश्च शुद्धा परदेवतापदे
वदान्यता चेत्यमुमाशिषद्गुरुः ॥ ३

स्तुवन् स शान्तापतिमाश्रमे मुनिं
गुहाशयालोकनजातसम्मदः ।
तमद्रिनाथं च मृडं मृगोल्लस-
त्करं मृडानीसहितं च तस्थिवान् ॥ ४

दिनानि तस्मिन् दश भूधरे गुरु-
र्हिमाचलाभे निवसन् यथोचितम् ।
पुनः समागात् स मठान्तिकस्थलं
विचित्रपुष्पोच्चयशोभिपादपम् ॥ ५

ततो नृपो हंसपतिं लुलोकिषु-
र्विचित्ररत्नाद्युपहारपाणिकः ।
परश्च हंसः सकलावभासको
गभस्तिमालासहितः समुद्ययौ ॥ ६

समारुरुक्षू पदवीमथोत्तमा-
मुभौ गुरुस्तौ समये शुभान्विते ।
विलोक्य सम्मोदतरङ्गितान्तर-
स्तुतोष भावीप्सितकार्यसाधकौ ॥ ७

ततो नृपं मातृवधूसहोदर-
प्रियावृतं तं श्रमलेशवर्जितम् ।
नतं समापृच्छत मङ्गलं गुरुः
पुरे च कोशे च रथे हयादिषु ॥ ८

प्रियं गुरुं स्वागतिकं तपोनिधिं
निरीक्षणेनामृतवर्षिणं नृपः ।
अवेहि सर्वत्र गुरोः प्रसादतः
शुभं त्विति श्राव्यतमं वचोऽब्रवीत् ॥ ९

वराशिषा तस्य वरः स भूभुजां
विमानकल्पोन्नतसौधमाश्रितः ।
पुरस्क्रियावर्धितकान्तिभासुरो
गुरुप्रभावे भृशमादधे मनः ॥ १०

वरोटजे मङ्गलविष्टरस्थितं
गुरुं स सायं प्रियसोदरान्वितः ।
प्रणम्य कृत्वा विनयेन सत्क्रियां
त्रिलोकमातुश्च वरं गृहं ययौ ॥ ११

सलक्ष्मणो दाशरथिस्तपोनिधिं
प्रगे प्रसन्नं कुशिकात्मजं यथा ।
सगर्भ्ययुक्तो नृपतिः समाययौ
गुरुं तमव्याजकृपापयोनिधिम् ॥ १२

दिवाकरस्मेरकरप्रकाशिते
तटे शुकादिद्विजनादरञ्जिते ।
नृपाय तस्मै परदेवतामनुं
मुदोपदिश्य क्रममप्यथोचिवान् ॥ १३

क्षमावनोद्योगसमर्थतावहां
क्षमादिसम्पत्तिविधायिनीं श्रियम् ।
अवाप्य तस्मादवनीपतिः पुरं
प्रतस्थिवान् विस्मयमानमानसः ॥ १४

शिवप्रदातुः स शिवस्य पूजनं
शिवक्षपासम्भवमम्बिकापतेः ।
शितव्रतस्तत्र विधाय सत्वरं
शिवाय यात्रां जगतोऽतनोद्गुरुः ॥ १५

प्रणम्रशिष्याखिलसम्पदे गुरु
र्बलाहकं तत्र वचोऽब्रवीदिदम् ।
क्रमेण सह्यं व्रज दर्दुरं गिरिं
जलं प्रवर्षन् मलयं च भूधरम् ॥ १६

इति प्रयुज्याशिषमब्जसम्भव-
प्रियां च निध्याय मनस्ययं गुरुः ।
नृपस्य शिष्ट्या पथि राजपूरुषै-
र्विनेयबृन्दैः सहितः समाययौ ॥ १७

शुभस्वभावं सुमतिं च माधवं
तदा स्वराज्ये सचिवं व्यधान्नृपः ।
बृहस्पतिर्हि त्रिदिवेशितुः सभा-
मलंकरोति प्रतिभासमन्वितः ॥ १८

ततश्च मेने स गुरुप्रभाववि-
न्महात्मनां वाक्फलदा भवेदिति ।
गुणेषु रत्नेषु हि तद्विदां मनः
प्रवर्तते तद्ग्रहणाय तत्परम् ॥ १९

गुरौ स भक्तः पथि तस्य सम्भृतं
पुरस्क्रियाभिः सदृशीभिरन्वहम् ।
निकेतनादि प्रथमोऽधिकारिणां
विदंस्तुतोषावनिपालशासनात् ॥ २०

ततः स मेने विदुरोपमः शुचि-
र्गुरोः सपर्यां पुरुषार्थदायिनीम् ।
विधातुमग्र्यां पठनाभिधे स्वके
विशालबुद्धिर्भवने शिवे पुरे ॥ २१

पुरोपकण्ठं स गुरुर्जितश्रमः
क्रमेण यावत् समियाय जित्वरः ।
गुणाभिपूर्णः सचिवश्च माधवः
समेयिवांस्तावदमुं समर्चितुम् ॥ २२

निवेदयामास स च स्वमाशयं
गुरोः सकाशे शुभधाम पावनम् ।
मदीयगेहस्य गुरुः पवित्रतां
करोतु पूजादिभिरित्युदारधीः ॥ २३

प्रगे गुरुर्मङ्गलपत्तनान्तिके
विधाय सर्वं मुदितोऽभवन्मुनिः ।
प्रबोधयन् सर्वजनान् रविस्तदा
करैः सहस्रैरुदियाय भासुरैः ॥ २४

अथ प्रधाना नृपतेः सहोपदा
विनीतवेषाः क्रमशो निवेदिताः ।
गुरुं प्रणेमुः प्रमिताभिभाषिणो
निवेदयन्तोऽभिजनं च नाम च ॥ २५

अथाध्यरोहच्छिबिकां हिरण्मयीं
पुराणगुर्वाचरितं विचिन्तयन् ।
जिताभिलाषाः समलोष्टकाञ्चना
अपि प्रपूर्वाचरितं चरन्ति हि ॥ २६

नवाभवत्तस्य पुरस्य काचन
द्युतिर्महात्मेक्षणयोगसम्भवा ।
जनाश्च सूर्योदयमोदसम्भृताः
समाबभुः सम्भृतनूत्नभूषणाः ॥ २७

अथोदभूदग्निशरोदितध्वनि-
गजा हया नेतृमनुष्यशिक्षिताः ।
पदातयो दण्डधरा ययुः क्रमा-
न्नृपाज्ञया तत्र पुरे गुरोः पुरः ॥ २८

जगुः कलं माङ्गलिकं च मागधा
जनास्तदा लोकगिरं बभाषिरे ।
तथापदानं प्रथमस्य भावुकं
गुरोः पुरः पेठुरभूतवैभवम् ॥ २९

द्वियोजनायाममलङ्कृतं नवै-
र्ध्वजैर्मनोज्ञैर्धवलच्छदान्वितैः ।
विशालवीथीपरिबृंहितान्तरं
पुरं गुरुर्मङ्गलभासितं व्यधात् ॥ ३०

शिरस्सु नृणां विनतेषु भासुरान्
शुभाक्षतान् मन्त्रजपानुभावितान् ।
विनिक्षिपन् मङ्गलभाषणान्वितो
गुरुर्ययौ तत्र सृजञ्शुभां श्रियम् ॥ ३१

पदे पदे स्वागतिकीश्च पत्रिका
मुदा स दृष्ट्वा भृशमन्वमोदत ।
तदा प्रकृष्टा प्रतिभा नवाभव-
न्नृणां पुनः सत्कविताप्रदायिनी ॥ ३२

नभःस्थलं मध्यममाश्रिते रवौ
प्लवङ्गसंवत्सरचैत्रमासि सः ।
गृहं ययौ मन्त्रिवरस्य भासुरं
पुरे प्रशस्तेऽभिजिति स्थिरश्रियै ॥ ३३

सितच्छदे द्वादशघस्रसंयुते
गृहं पवित्रं विशति द्विजावृतम् ।
सुधावदातं महितस्य मन्त्रिणो
नवाभवच्छ्रीरपि नाकदुर्लभा ॥ ३४

तदुच्चसौधं निकषा तपोवनं
प्रसूनसम्पूर्णलतासमावृतम् ।
विराजते नन्दनकल्पमद्भुतं
द्विरेफझङ्काररवानुवादितम् ॥ ३५

प्रफुल्लराजीवनिरन्तरावृतं
सरश्च शीतोदकनित्यसम्भृतम् ।
मुनीशितुर्मज्जनयोग्यमुत्तमं
प्रकाशते ध्यानसमर्हवेदिकम् ॥ ३६

लतागृहैर्वेस्मगृहैः कुथास्तृतैः
प्रियातिथिश्रेष्ठसमर्हणोचितैः ।
समावृतं दृश्यशुभासनान्वितै-
र्जलप्रसूनान्वितभाजनान्वितैः ॥ ३७

लसन्ति यन्त्रप्रसृताश्च निर्झरा
निपानकल्पाः शतशः सुशीतलाः ।
तटित्प्रचारोपचिताश्च दीपिका-
गणाश्च तारागणसन्निभाः सदा ॥ ३८

ततो गुरुस्तत्र समागतान्नरान्
वरान् यथार्हं मृदुभाषणादिभिः ।
प्रमोदयन् साक्षतदानमाश्रितान्
श्रिया समेतान् विससर्ज सस्मितः ॥ ३९

द्विजादयस्तत्र दिने दिने पुरे
सहस्रनामादिभिरम्बिकापदे ।
समर्च्य निर्माल्यमपूर्वमादरा-
द्गुरुप्रदत्तं जगृहुः पदं श्रियाम् ॥ ४०

पुरी बभासे गुरुणा तपस्विना
दिवः स्थलीवांशुमता सुरोचिषा ।
विभासुरेणेव च वेदिरग्निना
सनत्कुमारेण यथा हरेः पुरी ॥ ४१

नराः कियन्तो जगृहुः शुभोदकं
गुरुप्रदत्तं भवतापहारकम् ।
निधानकल्पं रमणीयकुङ्कुमं
मुदेति वक्तुं प्रभुतास्ति कस्य वा ॥ ४२

विदन् स शिष्येष्वमितेषु साधुषु
　　प्रियेषु पुत्रेषु पितेव सादरः ।
स्वयं तदात्मत्वमुपेयिवाञ्श्रियं
　　विनैव तद्वाक्यमदादभीप्सिताम् ॥ ४३

अनन्यभावास्तमकाममागता
　　विनेयसङ्घाः कतिचित् समीप्सितम् ।
विवक्षवोऽप्यासत मौनिनो भृशं
　　महात्मनां सन्निधिरेवमेव हि ॥ ४४

पुरी समस्ता गुरुराजदीधिति-
　　प्रसन्नसन्मार्गसमृद्धिशोभिनी ।
समादरः शाश्वतधर्मदर्शने
　　नृणामभूच्छ्रद्धधतां गुरूदिते ॥ ४५

महानुरागो ववृधे प्रतिक्षणं
　　श्रुतिष्वथान्यासु च धर्मसूक्तिषु ।
सुशिक्षितुं तन्त्रचतुष्टये मनो
　　बभूव विद्यार्थिकदम्बकस्य च ॥ ४६

प्रियः सुहृद्भिः सहितोऽथ माधवो
　　न्यवेदयत्तं गुरुमिष्टसाधकम् ।
इह प्रतिष्ठां प्रथमस्य सद्गुरो-
　　र्लषन्ति सर्वे मनुजाः शुभैषिणः ॥ ४७

शुभालयोऽप्यस्य गुरोर्विशेषतः
समस्तवन्द्यो भवतु स्थिरो महान् ।
नृपः प्रदित्सत्युचितां शुभां स्थलीं
तदालयार्हां सुकृतेक्षणः स्वयम् ॥ ४८

पुरा च शेषाद्रिरतिप्रियो गुरो-
र्महामनाः स्वाशयमत्र चोचिवान् ।
तथार्पयत्यत्र च रामचन्द्रकः
परं प्रकृष्टं सदनं बहुश्रुतः ॥ ४९

इतीरितं तेन वदातबुद्धिना
सुहृत्समे तेन नतेन मन्त्रिणा ।
निशम्य सर्वं नितरां प्रहर्षयन्
वचस्तमेनं पुनरब्रवीदिदम् ॥ ५०

निरन्तरायं भवदीप्सितं नवं
भवत्विदानीमिह मङ्गले पुरे ।
शुभे मुहूर्ते विजये विधिप्रिये
श्रियेति च श्रीगुरुरन्वमंस्त तत् ॥ ५१

विराजतां लोकहिताय षण्मती
गुरुप्रभावादिह मङ्गले पुरे ।
यथावनौ मालमिदं स्थलं मह-
त्तथास्तु विद्यास्वपि सर्वथोन्नतम् ॥ ५२

इति ब्रुवन्नाश्रवमण्डलावृते
गुरौ प्रियालापिनि रामचन्द्रकः ।
समर्पयामास मुदाक्षदर्शकः
प्रियावदातामुपदां श्रुतप्रियः ॥ ५३

शुभं स पृष्टः सकलेषु कृत्यवि-
न्मतं च मत्योरसिकृत्य मन्त्रिणः ।
धनं च दत्त्वायुतकं द्विरुत्तमं
स्थिरं जहर्ष स्थितिमान् गुरोः पुरः ॥ ५४

मुदा कुलीनः स च माधवो महीं
गुरोरधीनां नृपतेश्च शासनात् ।
चकार पुर्यां हृदयोपमां तदा
विधातुकामो गुरुशंकरालयम् ॥ ५५

यदालयं शंकरदेशिकेशितुः
स चाततानाङ्कुतमास्तिकोत्तमः ।
तदा जयन्ती श्रुतिधर्मरक्षणे
प्रजानुकूला समगच्छत प्रिया ॥ ५६

फलैश्च पुष्पैर्मधुरैः सुगन्धिभिः
श्रिया सहागादथ माधवः प्रियः ।
बुधाः समीयुः शतशश्च सेवितुं
गुरोर्जयन्तीमथ मङ्गले पुरे ॥ ५७

प्रगे च पेठुर्निगमांश्च वैदिका
    गुरोर्वितेने गुरुरर्चनादिकम् ।
शुचि प्रियं षड्रसमन्नमुज्ज्वलं
    द्विजादयश्चाशुरभूतमद्भुतम् ॥ ५८

सिनन्ति चित्तं स्म तदा नरा गुरौ
    स्तृणन्ति गानैः स्म च गायका दिशः ।
वृणन्ति भक्ताः स्म च शंकराङ्घ्रियं
    गुरोर्जयन्त्यां स्म हितां निरन्तराम् ॥ ५९

महालयोऽसावुदितो नभः स्पृशन्
    विधूपमो विश्वजनप्रियो नवः ।
शुभा प्रतिष्ठा भवतु प्रियेशितु-
    र्जनानुकूल्याय गुरोर्भवत्कृता ॥ ६०

निशम्य तर्त्तहिं मधूपमं वचो
    वरस्य तस्य प्रमितप्रभाषिणः ।
तदा गुरोर्मङ्गलदां सुधामयीं
    तनुं प्रतिष्ठापयितुं मनो दधे ॥ ६१

ततो गुरुः काव्यदिने शुभावहे
    छदे च कृष्णे मधुमाससंयुते ।
जगद्गुरुं द्वादशके तिथौगुरु-
    स्ततः प्रतिष्ठाप्य सिषेच चामृतैः ॥ ६२

बुधाः प्लवङ्गाब्दसमुद्भवं महं
शिवस्य सन्तोषसरित्पतेर्गुरोः ।
दिदृक्षमाणाः करुणां च लिप्सवः
समागताः संजगुरेवमुत्तमम् ॥ ६३

महोऽयमास्ते मुनिचक्रवर्तिनो
महीतलेऽत्यन्तयशःसुखावहः ।
महान् मतस्याखिलतत्त्वबोधिनो
महःसमो मङ्गलसम्पदाकरः ॥ ६४

पुरी च राजत्यमरावतीसमा
पुराणपृथ्वीपतिपुण्यसंहतिः ।
पुरंदराभो गुरुसङ्गनिष्ठितः
प्रशास्ति यामद्य च कृष्णभूपतिः ॥ ६५

वहन्ति पुष्पाण्यमितानि नन्दन-
प्रियामलोद्यानभवानि योषितः ।
गुरुप्रसादाधिगमादृताशयाः
फलैः सहास्यां गुरुपादपूजने ॥ ६६

जनाश्च यस्यामपि मध्यमेऽहनि
प्रियं न गृह्णन्ति च तालवृन्तकम् ।
मधुर्भृशं लेख इवावनीपते-
र्नृपान् प्रियानाह्वयतीह संमतान् ॥ ६७

अयं हि देशः सुकृतायितः सतां
नृपश्च यत्रोज्जयिनीपतेः समः ।
गुरुप्रभावादनुशास्ति चण्डिका-
कृपावृतं हेममणिप्रभासुरम् ॥ ६८

वहन्ति नद्यः शतशोऽत्र निर्मलाः
कवेरकन्याप्रमुखा बहूदकाः ।
शुभाश्च रेवादितरङ्गिणीसमाः
फलप्रसूनाञ्चितपादपावृताः ॥ ६९

सदा प्रसूते नितरां वसुन्धरा
हिरण्यमत्युज्ज्वलमर्थवत्यसौ ।
नृपेण धर्माचरणातिशोभिना
गुरुप्रियेणाभिनवेन रक्षिता ॥ ७०

सुरालयाः सन्ति च धर्मशालिका
निकामसंपूजनतुष्टदेवताः ।
अलं बहूक्तेन महीसुरं पुरं
कुबेरकल्पो नृपतिः प्रशास्ति च ॥ ७१

इतीरयन्तो विबुधा विधिप्रिया-
पदाब्जनिर्वर्णनतत्परं मुनिम् ।
प्रणम्य सम्मानमपूर्वभङ्गुतं
प्रपेदिरे सद्गुरुदृष्टिपाविताः ॥ ७२

निशामुखे काचन संसदाबभौ
गुरोः समक्षं गुरुवाङ्मुखोत्सुका ।
स चादिदेवस्य गुरोः प्रपूजनं
कलादिसम्पत्तिनिदानमूचिवान् ॥ ७३

ततः श्रियायं सह मङ्गलाक्षतान्
ददत् प्रतिष्ठामपि तत्र शाङ्करीम् ।
स्थिरापताकामिव सर्वसम्पदे
विधाय यात्रां प्रति संननाह सः ॥ ७४

अथान्वितो माधवमुख्यसज्जनै-
स्तथा स्वकीयैरधिकारिभिर्गुरुः ।
क्रमेण गच्छन्नपि चेन्नपत्तनं
महीसुरं पत्तनमागतोऽन्तिके ॥ ७५

ततो नृपालोऽप्यधिकोन्मना वृतो
विनीतवेषो द्विपपत्तिवाजिना ।
समाययौ गोपुरमुद्धृतध्वजं
सपूर्णकुम्भद्विजवदनिःस्वनम् ॥ ७६

नृपश्च तस्मै गुरवे सुवर्चसे
वधूप्रसूभ्रातृसगोत्रसंयुतः ।
स रत्नमालां प्रददौ सहोपदां
प्रणम्य रम्यप्रसवोपशोभिताम् ॥ ७७

अथानुगृह्णन् कृतधूलिपूजनं
महेन्द्रकल्पं मधुभित्समो गुरुः ।
ददत् प्रसादं च रमानिकेतनं
समाययौ संस्कृतपाठशालिकाम् ॥ ७८

विराजते या निकषोपलायिता
समस्तदेशस्थितकोविदावलेः ।
निवासभूमिर्निगमागमादिम-
प्रशस्तविद्याव्रततिश्रियां सदा ॥ ७९

समेयुषस्तां बुधमण्डली गुरोः
करे मुदा स्वागतपत्रिकाः शुभाः ।
समार्पिपत् स्वादुनिबद्धवर्णिका
विशुद्धभावाः शुभभक्तिसम्भृताः ॥ ८०

गुरौ तथैवं सति शास्त्रसद्मनि
प्रियानुकूलाखिलतत्त्ववर्षिणि ।
जनाः पपू रोगभयापहं वचो
गुरुप्रदत्तं शतशः सहस्रशः ॥ ८१

गुरुः स शुक्रे भृगुवासरे शुभे
क्षितीशभाग्योन्नतसौधमेयिवान् ।
विधाय पूजामखिलेशितुः शुभां
ददौ सुरम्यां क्षितिपाय मालिकाम् ॥ ८२

इह प्रतीच्यां विषभक्षकः शिवः
शिवप्रदाता कपिलातटे शुभे ।
विराजते प्राग्दिशि विष्टरश्रवाः
कवेरकन्यातटमाश्रितः श्रिया ॥ ८३

इहास्ति शृङ्गे सकलेष्टदायिनी
जगत्प्रसूर्वेदमयी स्वयम्प्रभा ।
सरस्वती शास्त्रमयी विधिप्रिया
सदाधितुङ्गातटमस्ति भव्यदा ॥ ८४

क्षरन्ति गावो मधुरं पयः स्वयं
सुवर्णसम्बद्धविषाणभासुराः ।
लसन्ति चाश्वत्थमुखा वरद्रुमा
द्विजाश्च सत्कर्मरताः सदाशिषः ॥ ८५

अतः किमाशास्यमिहास्ति चिन्तितं
नृपालमौले तव पार्थसन्निभ ।
अथापि दुह्यात् सकलं वसुन्धरा
सुतं सुवीताभिमतं महिष्यपि ॥ ८६

दिनेषु गच्छत्स्वथ भूपवन्दितो
महोत्सवं तत्र चकार निर्ममः ।
य आविरासीदसमो महीतले
कुबेरपुर्यामिव सिद्धसेवितः ॥ ८७

तथा हि तस्मिन् दिवसे जनव्रजः
समाययौ नित्यपुमर्थलिप्सया ।
अथारजस्का वसुधा समाबभौ
मरुद्ववौ शीतपयःकणावहः ॥ ८८

गुरुर्वहञ्शीर्षतले किरीटकं
सपुष्परागादिमणिप्रभासुरम् ।
वपुष्युदात्तं कनकांशुसम्भृतं
दुकूलमत्यद्भुतहारशोभितम् ॥ ८९

करेऽक्षमालामपि वाहनस्थितो
विचिन्तयन् स्वं गुरुमात्मनि स्थितः ।
शुभं वितन्वन्नपि शिष्यसन्तते
रराज शान्तापतिसंनिभो गुरुः ॥ ९०

मनुं वरं हंसमपि प्रचिन्तय-
न्नयन् प्रशस्तां क्षणदां क्षणोपमाम् ।
विलोकयञ्शंकरमादिमं गुरुं
पुनः स विद्यालयमभ्युपेयिवान् ॥ ९१

हिमाचलाभे महिषीं महेशितु-
र्महीधरेऽम्बां समपूजयद्गुरुः ।
तथा व्यतानीदखिलं महं वरं
पुरे यथार्हं नृपसम्पदाकरम् ॥ ९२

कविर्यदि स्यात् कविताप्रवर्तकः
प्रचेतसः सूनुरिहोत्सवं नवम् ।
सविस्तरं सर्वमिमं निरूपयेत्
स हि प्रचख्यौ भुवि रामवैभवम् ॥ ९३

तमोऽपहं मण्डलमम्बरे रवे-
र्महो विशुद्धं सवितुश्च तत्पतेः ।
वरेण्यमप्यस्य गुरुः समूचिवान्
महश्च सायं नमतां श्रुतीरितम् ॥ ९४

स एवं निःसङ्गो गुरुरनुचरन् राज्यमखिलं
वितन्वन् सन्मार्गं निगमगदितं सर्वसुखदम् ।
गुरुं च प्राचीनं नियतवसतिं भव्यनगरे
मुदा कुर्वन् यात्रां मनसि कलयन्नास्त नगरे ॥ ९५

रसालहिन्तालतमालशीतलं
विशालमागन्तृमनुष्यसङ्कुलम् ।
अनाविलं राजपथं ययुर्जना
जिघृक्षवः सद्गुरुनिस्तुलाशिषम् ॥ ९६

भूयाद्राजंस्तव जनपदे कामधुग्भूतधात्री
जीयाः ख्यातो जनकसदृशः पुत्रवान् धर्मशीलः ।
इत्याद्युक्त्वा कमलसदृशे पुष्पमालासमेतं
हस्ते प्रादाद्वरनरपतेः कुङ्कुमं साक्षतं सः ॥ ९७

तत्राचार्यो दश च दिवसांस्त्रींस्तथान्यानुषित्वा
शिष्यान् सर्वानपि च धनिनः सात्त्विकान् संविधाय ।
शृण्वन्नादं झरपतनजं साधु शैवे समुद्रे
रम्यं ग्रामं निगमभरितं प्राप गोप्यादिमं सः ॥ ९८

॥ इति श्रीजगद्गुरुसच्चिदानन्दशिवाभिनवश्रीनृसिंहभारतीविजये
पूर्वभागे षष्ठः सर्गः ॥

## ॥ पूर्वभागे सप्तमः सर्गः ॥

ग्रामं तमभ्येत्य गुरुः प्रहृष्टो
व्यासर्षिपूजां स जनार्थ्यमानः ।
चक्रे प्रियां को द्विजबृन्दवन्द्यं
मुनीश्वरस्तं प्रजहाति पुण्यम् ॥ १

पूजां गणेशस्य च विघ्नहन्तु-
र्महं वितेनेऽथ च नावरात्रम् ।
ग्रामस्य तस्यास्ति शुभं वदातं
महत्रयं यत्र गुरुर्वितेने ॥ २

तमावसत्यब्जभवोपमाने
ग्रामं गुरौ नित्यहुताग्निपूतम् ।
भूमिस्पृगग्र्योऽथ चिदम्बराख्यः
प्रणम्य तं शान्तमिदं बभाषे ॥ ३

कैलासकल्पं सुरबृन्दवन्द्यं
क्षेत्रं प्रशस्तं भुवि जम्बुकाख्यम् ।
यमावसत्यम्बुमयो महेशः
सदावृताङ्गो निखिलाण्डदेव्या ॥ ४

शिवालयं तत्र नवं विधातुं
न्ययूयुजन्मां वणिजः प्रसिद्धाः ।
परिष्कृतः सोऽस्ति समस्तनन्द्यो
गुरुप्रसादे किमिहास्त्यशक्यम् ॥ ५

कुम्भाभिषेकाय कृतोद्यमास्ते
सम्प्रार्थयन्ते गुरुमाप्तकामम् ।
त्रैगुण्यमुक्तात्मपरावलोको
निरन्तरायावसितेर्हि हेतुः ॥ ६

कुरुष्व भव्ये समये प्रशस्तं
कुम्भाभिषेकं शिवयोः शुभाय ।
तथानुगृह्णीष्व समस्तभक्तान्
गृहाण पूजां प्रथमां महेऽस्मिन् ॥ ७

यदि प्रदीप्येत सहस्रभानुः
समस्तनेत्रं मनुजाः पथि स्युः ।
द्विजाश्च कुर्युर्निखिलं च कृत्यं
स्थाने वृते ब्रह्मणि सिद्धकल्पे ॥ ८

उक्त्वा समस्तं विनिवेदनीयं
प्रणम्य सत्कृत्य च युक्तरूपम् ।
लब्धाभ्यनुज्ञां स च वैश्यनेता
सहाशिषा तस्य गुरोः प्रतस्थे ॥ ९

अन्येद्युरम्ब्यां स विधाय पूजां
वितीर्य सम्पत्प्रभवं प्रसादम् ।
प्रस्थाय सङ्घैर्विदुषां प्रपेदे
तटे भवान्याः प्रियमग्रहारम्[1] ॥ १०

स्नात्वा भवान्यां भवतापहन्त्र्यां
कवेरजासङ्गतिभासुरायाम् ।
निरुच्य चाचार्यमहाप्रभाव-
माम्रातटे प्राप शिवालयं[2] सः ॥ ११

पतिं पशूनां प्रथमं सुराणां
प्रणम्य चाभ्यर्च्य च बिल्वपर्णैः ।
आम्नायशालास्थवटून् प्रहृष्टान्
शुभाशिषान्यांश्च गुरुस्ततान ॥ १२

कवेरकन्योत्तरदक्षिणस्थ-
धराभृतोर्मूर्ध्नि रवीन्दुनेत्रम् ।
गङ्गाधरं शङ्करमीशमर्च-
न्नादिवाचा स गुरुर्ननाम ॥ १३

1. பவானி அக்ரஹாரம். 2. கரூர்.

सदाशिवेन्द्रं मुनिमात्मनिष्ठं
शुभं समापृच्छ्य निसर्गसौख्ये ।
स भाषमाणः सह तेन मन्दं
तस्थौ चिराय स्मयमानवक्त्रः ॥ १४

मध्येपथं भूपसमेन विष्णु-
प्रियेण दत्तां प्रथमेन पुंसाम् ।
स वासुदेवेन वरां नमस्यां
कृष्णोपमोऽस्मै वितताार भूतिम् ॥ १५

कुमारमस्याश्च तटे तटिन्याः
कवेरजायाः करुणापयोधिम् ।
करात्तदण्डं शिखिबर्हभूषा-
समावृताङ्गं स नुनाव पद्यैः ॥ १६

प्रशस्यमासेचनकं वराभि-
र्बुधप्रियाभिर्नवसंविधाभिः ।
जम्बुस्थलं प्राप मुदा गुरुः स
द्विजोदिताभिः सह वेदवाग्भिः ॥ १७

जलस्वरूपं पतिमुग्रमीशं
हरिं समभ्यर्च्य जलजापतिं च ।
वन्द्यं जनानामखिलाण्डदेवी-
दृग्भ्यामुभाभ्यां विदधाति यत्र ॥ १८

प्रबद्धनागाभरणातिदीर्घा
वेणीव रम्या तटिनी चकास्ति ।
यस्मिन् स्थले फुल्लसुगन्धिपुष्प-
प्रभासुरा किन्नरयुग्मदृश्या ॥ १९

इमे च चोला बहुशालिपूर्णाः
सह्यात्मजायाः पयसा यथैवम् ।
महान् प्रदेशो भवतान्महत्या
श्रीलोकमातुः कृपया भवेच्च ॥ २०

तपःसमृद्ध्या भवतां महेशः
कुम्भाभिषेकादपि सुप्रसन्नः ।
शिवः पुमर्थान् विदधातु सद्यो
स्मृतोऽप्यभीष्टं हि करोति शंभुः ॥ २१

भूयान्मनीषा भवतामिहैव
स्थिरा भविष्येऽपि च कालटीये ।
महे प्रशस्तेऽखिललोकसेव्ये
भक्तिर्हि साध्वी भुवि कामधेनुः ॥ २२

गुरोरुदारां मधुरां गिरं तां
महोत्सवे तत्र निशम्य वैश्यः ।
निर्वर्तयंस्ता महरीतिमग्र्या-
ममंस्त लक्ष्मीं स्वकरस्थलस्थाम् ॥ २३

स्वरेण मन्त्राञ्जगदुश्च विप्रा
भूरिप्रदानं समये चकाशे ।
ददौ प्रसादं गुरुराड्जनेभ्यो
महश्च पूर्तिं समगात् क्रमेण ॥ २

खलाश्च बिभ्युः सततं स्मरन्तः
प्राग्देशिकस्योग्रनृसिंहशक्तेः ।
क्षमां नृसिंहस्य नवस्य मान्यां
शिष्टाश्च शिष्याः शतशः प्रणेमुः ॥ २

अन्येद्युरार्यः सहसोपगम्य
धामाम्बिकायाः परमेशितुश्च ।
यथोचितं तौ प्रणिधाय देवौ
सर्वस्य लोकस्य ततान भव्यम् ॥ २

कवेरकन्यातटवासिभिर्जनैः
सम्प्रार्थितोऽपि स्वयमाप्तकामः ।
ऐन्द्रीं दिशं गन्तुमसौ न मेने
पर्युत्सुकः कालटिभूमिमेतुम् ॥ २

तान् सान्त्वयित्वा स निकाममुक्त्वा
धर्मस्थितिं भव्यफलाप्तिहेतुम् ।
श्रीरङ्गनाथस्य पुरं विशालं
ययौ विनेयैः सह वेदनिष्ठैः ॥ २

रङ्गे विचित्रे विविधैर्विमानै-
वैकुण्ठकल्पेऽमरसेवनीये ।
शिष्यस्य बालस्य गुहस्य वीथ्यां
चैत्र्यां प्रपेदे स विशालहर्म्यम् ॥ २९

ब्रह्मण्य उच्चैः स्वगृहे सुपूर्वः
सुहृद्वृतो भक्तिसमृद्धमर्घ्यम् ।
पाद्यं मधु श्रेष्ठमुपायनादि
प्रष्ठाय तस्मै गुरवे वितेने ॥ ३०

रात्रौ गुरुस्तत्र कलाविलास-
प्रद्योतमानालयराजमानम् ।
शेषासनस्थं कमलासनाथं
मुदोपतस्थे निगमान्तवाक्यैः ॥ ३१

विभीषणो रामकरप्रदत्त-
मिक्ष्वाकुसन्तानधनं प्रशस्तम् ।
व्यधत्त यत्राखिललोकवन्द्यं
बिम्बं जगत्क्षेमकरं महात्मा ॥ ३२

श्रीशङ्करो यत्र कवाटबन्धं
भित्त्वा प्रविश्यान्तरनाद्यनन्तम् ।
आनर्च लक्ष्मीपतिमित्युदात्ता
गाथास्ति गीता महिता धरित्र्याम् ॥ ३३

स्थित्वात्र कांश्चिद्दिवसान् मुनीन्द्रो
दत्त्वा पवित्रं मधुरं पयश्च ।
आस्थानिकांस्तत्र विधाय तृप्तान्
सम्माननैस्तत्सदृशैर्ययौ सः ॥ ३४

कवेरजातामथ दक्षिणेन
द्विपाननाधिष्ठितशैलमध्याम् ।
गतो महेन्द्रालयसन्निभां सभां
द्विजादिमुख्यैस्त्रिशिरःपुरे सः ॥ ३५

ततो महादेवबुधः प्रधानः
प्रशस्तदण्डाधिकृतैः समेतः ।
गृहे महार्हे गणपत्यभीष्टे
तस्योपचारं विधिवद्वितेने ॥ ३६

कृष्णो धनी भूपसमो विशुद्ध-
स्तं देशिकं पादतले प्रणम्य ।
आनीय गेहं विविधोपहार-
सम्पूर्णमानन्दमवाप सान्द्रम् ॥ ३७

हर्म्ये च तस्मिंस्तरुणेन्दुमौलिं
विन्यस्य हैमे मणिगुम्भदीप्ते ।
पीठे प्रसूनैर्विविधैरमूल्यै-
र्गुरुः समानर्च पुरेष्टकारी ॥ ३८

नारायणस्तत्र वरो द्विजानां
लक्ष्मीपदादिर्धनिको वदान्यः ।
सगर्भ्यबन्ध्वादियुतः सपर्यां
गुरोर्वितेने कुलपूर्वजुष्टाम् ॥ ३९

आनन्दनृत्तं नटराजमूर्तेः
समक्षयन् सोऽपि निवृत्तबन्धः ।
निरूपयामास मुदा सभायां
छान्दोग्यवाक्यैः सह हार्दविद्याम् ॥ ४०

दिनानि नीत्वा कतिचित् स योगी
पुरे च लक्ष्मीं स नवां प्रसार्य ।
पुरीं विशुद्धां नवसालनाम्नी-
ममात्यसंम्प्रार्थनया प्रपेदे ॥ ४१

कामेश्वराद्यैर्विबुधैः प्रधानै-
र्नृपान्वयस्य स्थितयेऽर्थ्यमानः ।
पूजां वितेने परमेशितुः स
प्रत्यक्पराणां किमितोऽस्ति चान्यत् ॥ ४२

मध्येपथं मन्त्रिवरानुयातो
मज्जन्महिम्नि प्रमदे प्रकृष्टे ।
स सत्यमूर्तेः समये सपर्यां
सत्यस्वभावः सदृशीं चकार ॥ ४३

क्रमेण सोऽगाद्गुरुरालयाख्यं
वेदादिपाठालयराजमानम् ।
ग्रामं सरस्योपवनेन रम्यं
मृदङ्गघोषोन्मुखबर्हिजुष्टम् ॥ ४४

पादोद्भवस्तत्र विधेः प्रशान्तो
गोरक्षणोद्यानतटाककारी ।
गुरुप्रियो द्राविडवाक्प्रवीणः
कुम्भाभिषेकाय गुरुं ययाचे ॥ ४५

भवत्प्रसादादुदभूत् समस्तं
महोचितं मङ्गलवस्तुजातम् ।
विधाय भव्ये समये प्रतिष्ठां
शिवोमयोर्मङ्गलमातनुष्व ॥ ४६

पर्जन्यदेवो मघवानपीष्टं
वर्षेण सम्पादितवानुदारः ।
विभण्डकस्यात्मभवे महर्षौ
समागते युक्ततमो हि वर्षः ॥ ४७

इतीरितं तस्य वचः स शृण्व-
न्नमूल्यसम्पत्समवायरूपम् ।
कुम्भाभिषेकं शिवयोः स तेने
यात्रा तदर्थं हि गुरोर्विभाति ॥ ४८

मधौ महात्मा मधुरं महं तं
महामना मङ्गलमार्यगृह्यः ।
शितव्रतः शिष्टतमैः स तन्व-
ञ्शिवागमस्योन्नतिमाचचक्षे ॥ ४९

तत्रैव चाद्यस्य गुरोर्जयन्तीं
तर्कातिगे वस्तुनि लीनचित्तः ।
विधाय विश्राण्य च वित्तजातं
विद्वद्वरेभ्यः स बभौ निकामम् ॥ ५०

षडाननाध्यासितशैलमध्यं
षड्जस्वरासक्तमयूरबृन्दैः ।
समावृतं सत्पुरुषैः समोदैः
स्थलं समागात् स मयूरनाम ॥ ५१

पयस्विनीनां सदनं मनोज्ञं
सरोजिनीनामवरोहपङ्क्तिम् ।
द्राक्षालतानामपि वाटिकां स
प्रेक्षाम्बभूवानुपदं निकामम् ॥ ५२

मरुस्थलीयं क्व च पुष्पवाटी-
समावृता भूमिरियं क्व चास्ते ।
वित्तार्जनासक्तिरियं क्व चैषां
क्व चास्ति दानप्रवणा मतिश्च ॥ ५३

एवं गुरुस्तत्र विचित्ररीतिं
सम्प्रेक्षमाणोऽखिलदेशिकोऽयम् ।
विचिन्तयन् धातृविभुत्वमूचे
सहागतान् विस्मयिनो मनुष्यान् ॥ ५४

भूपोपमैः श्रेष्ठिभिरर्थ्यमानो
देशं समस्तं सधनप्रचारम् ।
वैदूर्यराजद्विविधाङ्गुलीयैः
प्रभासुरो भानुरिवास वन्द्यः ॥ ५५

वैय्यासिकाभः स गुरुः सपर्यां
व्यासस्य दन्तीशमुखस्य चेष्टाम् ।
शुचौ नभस्ये च विधाय तत्र
क्षेमं प्रशस्तं प्रययौ क्रमेण ॥ ५६

पञ्चालयानां प्रवरे प्रशस्ते
प्राकारजुष्टे वृषभध्वजोच्चे ।
क्षेत्रे विधायामृतगानुमूर्ध्नो
देवस्य पूजां भृशमाननन्द ॥ ५७

वाणीरमोमाकरुणाप्तिहेतुं
मास्याश्विनेऽत्रैव च नावरात्रम् ।
स नागरश्रेष्ठिभिरर्थितः सन्
महं वितेने सकलं यथावत् ॥ ५८

महाद्रिमेवं तनयादियुक्तं
षडक्षरेणाभिमतेन धीरम् ।
वर्चस्विनं तत्तनुजं च तत्र
चिरायुषं नीरुजमाप्तविघ्नम् ॥ ५९

पञ्चालयीमेवमसौ चरित्वा
तत्तत्स्थलस्थानपि तोषयित्वा ।
क्षेमं विधायाभिनवं च देशे
हालास्यमुद्दिश्य गुरुः प्रतस्थे ॥ ६०

प्रातः परेद्यव्यथ भानुकल्पः
प्रभासुरं वेगवतीप्रतीरम् ।
प्राभातिकश्रीप्रसृतं गुरुः स
प्रपेदिवान् मङ्गलवाद्यघुष्टम् ॥ ६१

स्नातोत्थितोऽसावधिभव्यधिष्ण्यं
वाग्बीजमाद्यं प्रणवं जपित्वा ।
पौरार्थितो भानुसमानतेजा
यथोचितालङ्कृतिकः प्रतस्थे ॥ ६२

पुरः प्रवेशेऽस्य महामहिम्नो
विधेः पुरस्येव गिरामभूमिः ।
प्रभाविरासीत् प्रणवा जनाना-
मानन्ददात्री दुरितापहन्त्री ॥ ६३

स्वानन्यचिन्ता परमस्य तस्य
वेदार्थविश्राणनतत्परस्य ।
श्रीसुन्दरोऽश्वादिकमालयस्थं
मोदाय सर्वं प्रथमं नुनोद ॥ ६४

अथोदभूत् काहलरम्यनादः
समन्ततो मङ्गलवाद्यघोषः ।
सतालमागानमशेषरम्यं
श्रीसुन्दरस्तोत्रकदम्बकं च ६५

वेदस्वरूपायितवाहनस्थं
धर्मस्वरूपायितशुद्धवेषम् ।
यशःस्वरूपायितशिष्यवर्गं
सञ्जग्मिरे द्रष्टुममुं मनुष्याः ॥ ६६

सौभाग्यसम्पत्प्रदमाप्तकामं
द्रष्टुं समेताः प्रघणं तरुण्यः ।
सारात्रिकाः कुङ्कुमशोभिफालाः
सभूषणाः साधुनिबद्धवस्त्राः ॥ ६७

स वेणुहस्तं मधुरापुरस्थं
गाश्चारयन्त शुभदाः सुवर्णाः ।
अक्रूरमित्रं श्रुतिसक्तदृष्टिं
पीताम्बरं तं जनता ननाम ॥ ६८

नेत्रेण वाचा मनसा च सर्वान्
संप्रीणयन्नक्षतभागधेयम् ।
आरात्रिपात्रे च वसु प्रयच्छन्
क्रमाद्ययौ स्यन्दनवीथिकाः सः ॥ ६९

स पूर्णकुम्भान् सहकारपर्णैः
समावृतास्यान् सफलांश्च गृह्णन् ।
द्विजप्रदत्तान् द्विजराजकान्ति-
र्द्वितीयहीनः प्रचचार वीथीः ॥ ७०

स नागराणामथ चागतानां
नामानि विद्या अपि जीविकाश्च ।
ब्रह्मण्यनाम्नो वदतः सुपूर्वान्
पृच्छंश्च तेषां शुभमाशशंसे ॥ ७१

उत्तिष्ठमानाः सुकृताय तर्हि
द्वयं प्रपन्नाः सुकृतं फलं च ।
जना यदास्तेः सुकृतस्वरूपः
सन्तोषरूपश्च गुरुर्महत्या ॥ ७२

पश्यन् गुरुस्तत्र विशालवीथीः
सिक्ताः सदीपा रजसा च मुक्ताः ।
कारुण्यपूरेण च तेजसा च
सत्त्वश्रिया च प्रचिता वितेने ॥ ७३

आकृष्यमाणा मनुजास्तदीयै-
गुणैरनन्या मनुजान्तरेभ्यः ।
तस्थुश्च तत्रैव गुरुर्यदास
स्वान्तेषु तेषां विहितात्मभावः ॥ ७४

आवेगवत्याः क्रमशः प्रसर्प-
ञ्श्रियं वितन्वंश्च तमो निरस्यन् ।
विश्राणयंस्तत्तदभीप्सितं च
गुरुर्ययौ गोपुरमम्बिकायाः ॥ ७५

ज्योत्स्नामिवेन्दोर्वदनस्य तस्य
श्रियं विशिष्टां सहजां विलोक्य ।
परं प्रहर्षं विविशुर्मनुष्याः
स्वात्मस्थितानां हि महान् प्रभावः ॥ ७६

कदम्बमालाः कलहंसकल्पा-
श्छत्राणि चन्द्रद्युतिभासुराणि ।
दीपाश्च नक्षत्रसमानशोभा
विभान्ति यस्मिन् वियतीव दीप्राः ॥ ७७

फुल्लं सरोजादिसुमं नवीनं
फलं च दृश्यं विविधं सुगन्धि ।
निरन्तरं राजति संविभक्तं
यत्रोन्नते देवगणागमार्हे ॥ ७८

यस्मिंश्च काले पटहः प्रकामं
संताड्यतेऽर्चासमयावबोधी ।
शुण्डासमाना विविधा विचित्रा
यत्रावबद्धा विलसन्ति मालाः ॥ ७९

अत्रागतस्यास्य मुनेः कराब्जे
द्विपेन्द्रकुम्भस्थितहेमकुम्भम् ।
रसान्तरं शुभ्रगुणावबद्धं
ददौ बुधः स्वान्तसमं विनीतः ॥ ८०

मीनेक्षणास्थानजना यथार्हं
सिद्धोपमं सुन्दरपूजनोत्कम् ।
सम्भावयन्तः सदृशैः प्रसादै-
र्मीनेक्षणायाः सह तेन जग्मुः ॥ ८१

शिवार्चकैः सादरमर्चितोऽसौ
सिद्धापदानं बुधबृन्दगीतम् ।
शृण्वन् ययौ मङ्गलवाद्यघुष्टं
कल्याणसौधं शरदिन्दुकल्पम् ॥ ८२

मीनेक्षणासुन्दरयोर्विवाहो
निर्वर्त्यते यत्र महो वसन्ते ।
सतां प्रमोदाय शुभाय शस्तः
सौभाग्यलक्ष्मीनिलयो जनानाम् ॥ ८३

ततो निषण्णं शुभविष्टरे तं
जगद्गुरुं मङ्गलधामनेत्रम् ।
बुधा मुदा स्वागतपत्रिकाभिः
प्रणेमुरानन्दपयोधिमग्नम् ॥ ८४

ततो यथावद्विबुधान् विशिष्टा-
नापृच्छ्य भव्यं जहको गुरुः सः ।
शुभं महार्थं मधुरं बभाष
महोपदेशं विदुषां प्रधानः ॥ ८५

विदितमिह बुधानां शङ्करो राजयोगी
सुगतजनहतानां सर्ववेदायनानाम् ।
सुरमुनिवरपूगैरर्थितो रीतिमग्र्यां
सकलभुवनतुष्ट्यै संवितेने प्रकामम् ॥ ८६

पुनरपि निगमोक्ता रीतयः साधु जुष्टा
दुरितसुगतमार्गध्वंसनात् सम्प्रवृत्ताः ।
सकलशुभसमृद्धेः सुन्दरेशस्य हेतु-
र्निगममयशरीरस्यादिकर्तुः कृपैव ॥ ८७

इह खलु विबुधानां सङ्घ आसीत् प्रसिद्धो
हितपथचरणाय श्रेयसां प्राप्तये च ।
शिववसतिपुरीयं भूष्यमाणा द्विजाद्यैः
परिविलसति भूमेः शेमुषीवातिपूता ॥ ८८

इदमपि च विशुद्धं द्वादशान्ताभिधानं
श्रुतिनिगदिततत्त्वक्षेत्रमेवाविमुक्तम् ।
झषसमनयनेयं राजतेऽस्मिन् भवानी
स्मरहरसुखधात्री वेदशीर्षोक्तविद्या ॥ ८९

निखिलदुरितभेत्ता सेतुरास्ते समीपे
कलशजमुनिरेष द्योतते गन्धशैले ।
द्युतिनिचयशरीरः पाण्ड्यदेशेऽत्र योगी
परशिवपरचित्तः सर्वविद्यासमुद्रः ॥ ९०

तदपि च पुनरुत्थं दुर्मतं दुःखहेतुं
प्रशमयतु झषाक्षी सुन्दराश्लिष्टगात्री ।
फलतु शिवकृपार्द्राकृष्टपच्यात्र धात्री
सकलसुखनिदानं रोगहीना मुदेति ॥ ९१

इति गुरुरतिमोदात् सस्मितं भाषमाणो
मुनिरिव घटजन्मा भूतलस्वास्थ्यदायी ।
अभिमतमखिलानां बोधयन्नित्यतृप्तः
शिरसि नतजनानामक्षतानक्षिपत् सः ॥ ९२

अयं हंसः स्वोच्चां स्थितिमनुसरन् प्राप चाकाशमध्यं
गुरुः श्रेष्ठो हंसः स्वयमपि ययौ व्योमकल्पं विमानम् ।
परो हंसो राजत्यमितसुखदः पूजकैः पूज्यमानो
भृशं छाया लीना सकलभुवनस्वस्थतायै जनानाम् ॥ ९३

इदं श्रेष्ठं गीतं मधुदयवचः सत्कवीनां तदानीं
मुदा श्रुत्वा सर्वे निगमगदितं तत्त्वमालोचयन्तः ।
गुरोर्लब्ध्वानुज्ञां परमपुरुषाराधनोत्कस्य शिष्या
ययुः स्वं स्वं धाम स्थिरसुखकृते चिन्तयन्तो गुरूक्तम् ॥

॥ इति श्रीजगद्गुरुसच्चिदानन्दशिवाभिनवनृसिंहभारतीविजये
पूर्वभागे सप्तमः सर्गः ॥

## ॥ पूर्वभागे अष्टमः सर्गः ॥

---

अथाधिकल्याणसभं मण्टपे हेमभासुरे ।
यथाक्रमं चन्द्रमौलिं विनिवेश्य स चार्चिचत् ॥ १

अर्थिनो विबुधान् प्रातः शिष्यानध्यापिपद्गुरुः ।
त्रिप्रस्थानीं यथान्यायं भगवत्पादवर्णिताम् ॥ २

उपादिशन्मन्त्रजातं तदर्थिभ्यो यथोचितम् ।
मध्याह्ने भक्तबृन्देभ्यस्तीर्थं प्रादाद्ददापहम् ॥ ३

सायं सभासदां प्रीत्यै बोधयामास वैदिकीम् ।
रीतिं मङ्गलसम्पत्त्यै चोदितां लोकदेशिकः ॥ ४

रात्रौ पूजावसाने च शास्त्रेषु विविधेषु सः ।
सङ्गतांश्चोदयामास विबुधान् विश्रुतान् गुरुः ॥ ५

दानैः सर्वैर्जपैस्तीर्थैः सुकृतं यत् प्रजायते ।
तत् सर्वमश्रमेणैव सम्बभूव तदा नृणाम् ॥

मुनिस्तपश्चक्रवर्ती शिष्यैरभ्यर्थितो गृहान् ।
गत्वा मनोरथं तेषां पूरयामास निःस्पृहः ॥ ७

बहुजन्ममहापुण्यपरिपाकात्मकं गुरुम् ।
पाण्डुसत्कम्बले श्रेष्ठे हर्म्ये तमुपतस्थिरे ॥ ८

सुवर्णपद्मिनीं केचिद्‌गाह्य स्फटिकोदकाम् ।
नीलोत्पलादिभिः पुष्पैः प्रीणयामास तं गुरुम् ॥ ९

दशकाः शतिका वैश्या भक्तिभार्यासमन्विताः ।
निष्कैरभ्यर्चयामासुर्वाग्देवीहेमपादुके ॥ १०

चन्द्रमौलिं कराम्भोजे लालयन्तं सुमैः शुभैः ।
पौरा दृश्याश्च तं दृष्ट्वा तृप्तिं नैवापुरञ्जसा ॥ ११

कल्याणलक्ष्मीकवचां तां सदां मुनिशेखरः ।
पुरुषार्थावासभूमिं चक्रे तत्तद्विधानतः ॥ १२

पूरियं जगतीमध्ये विश्वकर्मकृतैधते ।
गुहेव च सभा यस्यामात्मज्योतिः प्रकाशते ॥ १३

ब्रह्मलोकादिन्द्रलोकमागतानां नृणां कृते ।
तत्समाना पुरी सृष्टा वेधसा सूक्ष्मवेदिना ॥ १४

किं वात्र बहुनोक्तेन स्थिरेयं नाकसुस्थितिम् ।
वेदप्रोक्तां दर्शयन्ती राजते सर्वमङ्गला ॥ १५

तद्यूयं नित्यसम्बद्धौ नित्यसन्तोषदायिनौ ।
श्रीमीनाक्षीसुन्दरेशौ वन्दध्वं पितरौ सदा ॥ १६

एवमादि गुरुस्तत्र नवं नवमुदीरयन् ।
स कृष्णस्य च सिद्धस्य लीला विस्तरशोऽवदत् ॥ १७

पायं पायं वचस्तस्य स्मारं स्मारं च तद्गुणान् ।
ध्यायं ध्यायं तदुक्तार्थं तस्थुरानन्दसागरे ॥ १८

लेभिरे च जनाः स्वेष्टं जगदुश्च स्ववाञ्छितम् ।
सुन्दरस्य प्रतिनिधिः स हि रेजे तदा गुरुः ॥ १९

अन्तर्लीनां कृशां दीनां शिवयोस्तीर्थदायिनीम् ।
तापसीमिव मां सिन्धुर्गृह्णातु ह्रादिनीपतिः ॥ २०

इति विज्ञापयामास धुनी वेगवती गुरुम् ।
स्नातोत्थितं सेतुसक्तं पतिवत्नी शुभाशिषम् ॥ २१

नानारत्नमणिस्तोमकिरीटाञ्चितमस्तकाम् ।
बालसूर्यप्रतीकाशसिन्दूरोज्ज्वलफालिकाम् ॥ २२

वैदूर्यत्रितयाबद्धभूषणोज्ज्वलनासिकाम् ।
सुन्दरानद्धमाङ्गल्यमञ्जुभूषणकन्धराम् ॥ २३

प्रजाक्षेमस्रवत्क्षीरपयोधरमनोहराम् ।
हेमतन्तुचयद्योतिशुद्धकौशेयसंवृताम् ॥ २४

रत्नकिङ्किणिकाराजिहेमपट्टोज्ज्वलत्कटिम् ।
प्रपन्नजनताभीष्टप्रदायिपदपङ्कजाम् ॥ २५

श्रिताशेषजनाभीष्टप्रदनेत्राब्जभासुराम् ।
अर्चयामास पूजाज्ञः स निष्कैः कुटजैरपि ॥ २६

पुण्ड्राकारमणिद्योतिफालं सुन्दरमीश्वरम् ।
नत्वा स्तुत्वा स्तवैर्नव्यैराययौ स पुनः सभाम् ॥ २७

सुब्रह्मण्यं वावदूकं तत्र मित्रसमन्वितम् ।
अनुगृह्य प्रसादेन शिवयोस्तत्त्वमूचिवान् ॥ २८

सभा काचिद्विभात्यत्र धर्मशास्त्राभिवर्धनी ।
मठः साहायकं तस्यै वितरेदिति चाब्रवीत् ॥ २९

आस्त्रीबालं सङ्गतेभ्यो जनेभ्यो मङ्गलाक्षतान् ।
वितताार जितग्लानिः प्रतिष्ठासुः स देशिकः ॥ ३०

सर्वाधिकारी श्रीकण्ठः कौशेयैः कङ्कणैर्धनैः ।
विदुषः पोषयामास सन्निधौ सद्गुरोस्तदा ॥ ३१

ब्रह्मवित् स मुनिर्निन्ये दिनानां पञ्चविंशतिम् ।
वाग्भिः पीयूषलहरीस्पर्धिनीभिः शिवौ स्तुवन् ॥ ३२

प्रतिग्राममसौ पृच्छन् प्रत्येकं च जनान् शुभम् ।
सेतुराजार्चितस्तस्थौ तत्पुरे दिनगोयुगम् ॥ ३३

कलानिधिः सप्रवालमुक्ताफलसमाकुलम् ।
पारेसिन्धु प्रमोदाब्धिः प्रेक्षाञ्चक्रे पयोनिधिम् ॥ ३४

मध्येसिन्धु स्थितं शम्भुं देवीं पर्वतवर्धनीम् ।
सिषेविषुस्ततारासौ सिन्धुं कुल्यासमं गुरुः ॥ ३५

कृष्णायमाणः प्रथितां रामेश्वरपुरीं गुरुः ।
कार्त्तिकैकादशे घस्रे लेभे स बुधवासरे ॥ ३६

रत्नाकरमहोदध्योः सङ्गमे नित्यपावने ।
सस्नौ प्रातर्जपन् विप्रैरघमर्षणसूक्तकम् ॥ ३७

चक्रे दानादिकं तत्र शारदास्थानचोदितम् ।
स गुरुर्वर्तयन् सर्वान् स्वे स्वे कर्मण्यतन्द्रितः ॥ ३८

स्थलस्थान् वैदिकान् रुग्णान् दीनानर्थिजनान् गुरुः ।
ददत्तत्तदभीष्टं स प्रीणयामास तत्त्ववित् ॥ ३९

पूर्वा पयोदवसना विद्युन्नेत्रा ककुप् स्वकान् ।
कोलम्बांस्तं गुरुं नन्तुं चोदयामास गर्जितैः ॥ ४०

पयःपानप्रवृत्तेन घनेन गिरिणेव सः ।
मथ्यमानोऽर्णवस्तस्मै ददौ रत्नानि सूरये ॥ ४१

चद्रमौलिसमेतं तं चन्द्रिकासम्मितस्मितम् ।
अवाकिरज्जलकणैः शुद्धैः सिन्धुः सरत्नकैः ॥ ४२

पाशहर्तारमायान्तं पाशहस्तास्तवप्रियम् ।
मुक्ताफलैः प्रवालैश्च तमानर्च गुरुं प्रियम् ॥ ४३

मध्येपथं स श्रीरामं सीतया लक्ष्मणेन च ।
अञ्जनासूनुना युक्तं पुष्पैरानर्च सस्मितम् ॥ ४४

वल्गयन् वल्गुभिर्देवं दिव्यैरभिनवैःस्तवैः ।
आनर्च हैमैर्बिल्वैः स प्रेष्ठैः फुल्लैश्च पङ्कजैः ॥ ४५

मण्डपे मञ्जुलेऽत्युच्चे स्तम्भश्रेणीसमन्विते ।
प्राकारे विपुले रम्ये मघवाश्मविनिर्मिते ॥ ४६

असमेऽत्यद्भुते तत्स्था वाहनाभरणानि च ।
आयान्तं दर्शयामासुर्गुरुं शङ्करसप्रभम् ॥ ४७

मध्याह्ने शुद्धतीर्थेन सायं वाचा मनोज्ञया ।
रात्रौ शर्करया मृद्व्या सोऽन्वगृह्णाज्जनान् गुरुः ॥ ४८

एवं स प्रत्यहं चिन्वन् सर्वं सेतौ यथाविधि ।
नवपाषाणतीर्थादियात्रां तेने यथोचितम् ॥ ४९

अभितः सरणिं पश्यन्नाधाराणां मनोहरम् ।
कूलङ्कषत्वं सस्यानां समृद्धिं च ययौ गुरुः ॥ ५०

वीक्षणेनानुगृह्णन् स कृष्यासक्तान् कृषीवलान् ।
स ययौ चोलबृन्दाख्यं ग्राममग्राम्यभाषणम् ॥ ५१

धर्मशालां विशालां तमावसन्तं सुधागिरम् ।
माधवाद्यास्तत्र शिष्या उपचेरुर्गुरुं वरम् ॥ ५२

रामशेषस्तदापृच्छद्धरणीतलदेशिकम् ।
प्रकृतौ प्रत्यये चैव नञोऽर्थं विशयान्वितः ॥ ५३

भगवत्पादवत् सर्वं संशयं तं निवर्तयन् ।
सोदाहरणमाचख्यौ चतुःसूत्र्यां गुरुस्तदा ॥ ५४

ताम्रातीरं पुरा यामि प्राज्ञबृन्दसमन्वितम् ।
तत्र पूर्वं बुधा भाष्यमध्यैषत यथाक्रमम् ॥ ५५

इति ब्रुवन्तं तं देश्या जयन्तीपुरवासिनः ।
कुम्भाभिषेकसमये सन्निधानं ययाचिरे ॥ ५६

गुहकुम्भाभिषेकाय दक्षिणार्थं धनं बहु ।
श्रीकण्ठः कृत्यवित् प्रादात्तेभ्यः सद्यो मुदावहम् ॥ ५७

प्रायागो मालवीयोऽथ पण्डितो मदनाभिधः ।
पाठशालादिवृत्तान्तं तं गुरुं समवेदयत् ॥ ५८

शिवरात्रिव्रतं मध्येपथं च सरसीतटे ।
कृत्वा स चतुराद्रीन्द्रनेदिष्ठं ग्राममेयिवान् ॥ ५९

प्रीतांस्तत्र प्रियाञ्शिष्यान् विधाय विशदाशयः ।
श्रीवल्लीनगरे पूजां स वितेने शिवालये ॥ ६०

देवदानाभिधानेऽसौ क्षेत्रे तदधिपार्थितः ।
दूर्वाबिल्वदलश्यामे स वितेने गुरुः शुभम् ॥ ६१

रुजां प्रशमयंस्तस्य पयसा मन्त्रितेन सः ।
अन्नाय विहितायेष्टां रुचिं चाधाच्चिरस्थिताम् ॥ ६२

अर्धनारीश्वरं ग्रामे वासुदेवाभिधे गुरुः ।
अर्चन्नब्जैः स्तुवन् मन्त्रैर्लक्ष्मीं तेने स वीप्सिताम् ॥ ६३

शिष्यार्चितो ययौ ग्रामं समया दारुकावनम् ।
दलितेन्द्रशिलाश्मामं क्षीरनीरविराजितम् ॥ ६४

पुन्नागवनमध्यस्थां गोविद्यादायिनीं शिवाम् ।
गोभिर्गव्यसमानाभिर्गोमतीं तुष्टुवे गुरुः ॥ ६५

मृत्तिकाविषतापघ्नी यत्कृपारसभासुरा ।
पयश्च विदधातीष्टं पीतं यत् करुणायितम् ॥ ६६

यत्सन्निधौ पिशाचादिबाधा सद्यो निवर्तते ।
तां देवीं गोमतीं क्षीरैरसिञ्चत् स सुधासमैः ॥ ६७

धवलश्यामलाकारं देवं मध्येशिवालयम् ।
आनर्च स नवैः पुष्पैः शिष्यपुण्यचयैरिव ॥ ६८

पूर्णान् कनकसच्छायैः शालिभिर्भृशमानतैः ।
ग्रामान् पश्यंस्तथा शिष्यान् पिप्रियेऽन्तर्मना गुरुः ॥ ६९

शाखायां च शिखायामप्येकरूपान् द्विजान्नतान् ।
भगवत्पादकारुण्यं विस्तरेणोचिवान् गुरुः ॥ ७०

जयन्तीं शङ्करस्येष्टां प्रमनाः स गुरुर्ययौ ।
कर्तुं शैलं त्रिककुदमाहूतस्तेन निर्झरैः ॥ ७१

मधुश्चोपाहरत्तर्हि पनसादिफलं मधु ।
पुन्नागाशोकवकुलपुष्पैस्तस्मै महात्मने ॥ ७२

फलानि च सुगन्धीनि चाम्रादीनि ददद्गिरिः ।
गन्धर्वैरमरैः सिद्धैः शतकूटायितो बभौ ॥ ७३

तमुवाच गुरुं प्रह्वा चित्रा सा त्रिककुत्स्थली ।
जयन्तीमहसंसक्तमधिकल्याणमण्डपम् ॥ ७४

झर्यो रोगान् हरन्त्यो याः पेतुरम्बाकृपायिताः ।
ता एव संनिलीयन्ते दुष्टस्पर्शभयादिह ॥ ७५

पठन्तश्चाघमर्षादिसूक्तं यत्र द्विजाः पुरा ।
सस्नुस्तत्रैव ते तैलसिक्ताङ्गाः स्नान्ति निस्त्रपाः ॥ ७६

स्त्रियोऽपि निर्भया भुक्त्वा निर्लज्जा दूषयन्ति ताः ।
स्पृशन्ति विमता मर्त्या निश्शङ्कास्तां झरीं हठात् ॥ ७७

शेषाद्र्यार्यः पुरा तेने तच्छान्त्यै यत्नमास्तिकः ।
शक्नुयात् कः पापशान्त्यै विना लोकगुरुं पुमान् ॥ ७८

तथा निवेदितं सर्वं शैलोऽपि पुनरूचिवान् ।
गुरुस्तत्परिहाराय प्राक्रंस्त च तदोत्सवम् ॥ ७९

उषसि प्रणवं ध्यायन् पूजयन् पादुके प्रिये ।
दौर्वाससीः पठन्नार्यश्चक्रराजार्चनात् परम् ॥ ८०

अर्चयन् भगवत्पादं शृण्वन् भाष्यादिकं शुभम् ।
आपराह्णं ददत्तीर्थं कुर्वन् वाक्यार्थचिन्तनम् ॥ ८१

भगवत्पादबिम्बस्य ययौ लोकगुरुः पुरः ।
विद्यारण्यकृतं काव्यं शृण्वञ्श्रीकण्ठवाचितम् ॥ ८२

किरति स्मामृतकरः किरणान् मञ्जुलानपि ।
जगुः कलं च गन्धर्वा जयन्तीं शाङ्करीं दिवि ॥ ८३

ग्रामं स ताम्रवरणं वञ्चिराज्याधिकारिभिः ।
रामेण च वदान्येन प्रार्थितः प्रयतो ययौ ॥ ८४

तत्र रामो यथार्हं तं जायापुत्रादिसंयुतः ।
हर्म्ये स्वे पूजयाञ्चक्रे श्रीकामः प्रथमो नृणाम् ॥ ८५

शास्तारं श्वापदादीनां मध्येगिरि विभासुरम् ।
कुमारं सुरगोप्तारं मनसानर्च सद्गुरुः ॥ ८६

मालाकारं भूतधात्र्या नीलमेघप्रभासुरम् ।
विद्युत्प्रभासुरं शैलं गुरुः प्रेक्ष्यास्मरद्धरेः ॥ ८७

पाण्ड्यानां केरलानां च सीमाद्रिस्तं वरं गुरुम् ।
वीजयन् वृक्षशाखाभिराजुहाव च निर्झरैः ॥ ८८

षष्ट्यब्दपूर्तिकल्याणं रामचन्द्रो गुरुप्रियः ।
चक्रे पत्न्या सह स्वस्थो गुरुत्राञ्भ्रातृपालितः ॥ ८९

कालटीवृत्तमाचख्यौ विस्तरेणाखिलं गुरुम् ।
सोपानस्थैर्यलब्ध्यै स यन्त्रं जग्राह मन्त्रितम् ॥ ९०

सर्वसन्तापनिर्वाणप्रदातुरपि सद्गुरोः ।
तापः शरीरे प्रोद्भूतः सद्यः शान्तिमुपागमत् ॥ ९१

आपापनाशमासिन्धु तदा सन्निहिता जनाः ।
तं नत्वा लेभिरे लक्ष्मीं वैदिकीं नित्यसौख्यदाम् ॥ ९२

मार्ष्टि स्म वातोऽवर्णं च चाञ्चल्योत्थं सनातनम् ।
स्थिरं गुरुं सेवमानस्तर्हि गन्धं शुभं वहन् ॥ ९३

ललितानामभिः पूजां त्रिशत्या चाम्बिकापदे ।
रामस्तत्र विधायाप्नोत् कीर्त्या लक्ष्म्या सहाशिषम् ॥ ९४

कैलासादागतं लिङ्गं चन्द्रमौलेः सदार्चयन् ।
अगस्त्यभासितामाशां भूयो भासयति स्म सः ॥ ९५

केरलाधिपभूपालभोज्यदानादिवैभवम् ।
निरूपयन्निर्ममोऽसौ भक्तान् भक्तैरपोषयत् ॥ ९६

गुरुर्नीत्वा दिनान्येवं लिकुचाम्रादिशोभिनीम् ।
दक्षिणास्थां ययौ काशीं मलयाद्रितटस्थिताम् ॥ ९७

श्रीमुखाकारिताः शिष्याः पाण्ड्यग्रामनिवासिनः ।
पावूर्ग्रामस्थितं देवमेवं वाचं बभाषिरे ॥ ९८

नद्यादिषूदकं ग्रामे नास्ति किं करवामहे ।
अत्रैव चोपदां योग्यामर्पयाम इति द्विजाः ॥ ९९

ब्रुवाणेष्वेवमेतेषु स्मयमाने गुरौ प्रिये ।
वलाहको ववर्षाशु बिभेद ह्रादिनी तटम् ॥ १००

विस्मितास्ते तदा सिद्धं स्वस्मिन् ग्रामे ववन्दिरे ।
गुरोरनुग्रहः सद्यः फलतीति किमद्भुतम् ॥ १०१

तत्र तत्र क्रमेणैवं दर्शयन् न्सिद्धिमद्भुताम् ।
कल्याणीकटकोद्भूतं कटकं स ययौ गुरुः ॥ १०२

कल्याण्यम्ब कदम्बप्रसवविराजत्सुगन्धिकचपाशे ।
चन्द्रकलाधरफाले घटनां घटयाशु रसपूर्णाम् ॥ १०३

अपि पापनाश कुशलं गङ्गाद्वारप्रशस्तिसंयुक्त ।
व्यासमहर्षिसपर्यामाधातुं यावदायामि ॥ १०४

वर्तन्ते तत्सदृशा घटजन्माद्या महर्षयो नित्यम् ।
मध्येपथं तथोक्त्वा ग्रामं प्रागात् स कल्याणम् ॥ १०५

अलकासमानसम्पत्सन्दोहश्रीनिरन्तरं ग्रामम् ।
लक्ष्मीवराहकरुणापूर्णं सोऽलंचकार गुरुराजः ॥ १०६

मणिमुक्ताद्वीपवतीमणिसमकणसिक्तपूतसन्मार्गे ।
ग्रामे हर्म्ये सन्तं नामादेशं जना नमश्चक्रुः १०७

चक्रुः सर्वे शिष्याः शिष्टां पूजां समूहनिर्दिष्टाम् ।
कालटिमहोत्सवार्हां सद्गुरुसान्निध्यजातसम्मोदाः ॥ १०८

अष्टादशसु महत्सु ग्रामेष्वेवं विधाय सन्मोदम् ।
चन्द्रकलाधरमर्चन् धुन्वन् ध्वान्तं रराज विधुवत् सः ॥

उत्सवसमाप्तिदिवसे कनकसमाभांश्छुभाक्षतान् दत्त्वा ।
ऊचे वाचं मधुरां स गुरुः शिष्यान्निसर्गसौहार्दः ॥ ११०

भगवत्पादमहोत्सवमलमेकोऽपि प्रभुर्मुदा कर्तुम् ।
तदपि च माहिषी धातुर्धनमिव पुण्यं ददाति सर्वेभ्यः ॥

कुल्या दयेव तस्याः प्रवहति पुण्योदसम्पूर्णा ।
यूयं ततोऽत्र कुल्ये सङ्गच्छध्वं समस्तसम्पत्त्यै ॥ ११२

इति गुरुरनुरूपं देशिको भाषमाणो
निगमवचनसारं सादरं निर्ब्रुवाणः ।

श्रुतितनुरिव भानुर्द्योतमान स्वरूपः
प्रतिदिनमनुताम्रं ग्राममध्यं जगाम ॥ ११३

॥ इति श्रीजगद्गुरुसच्चिदानन्दशिवाभिनवनृसिंहभारतीविजये
पूर्वभागे अष्टमः सर्गः ॥

## पूर्वभागे नवमः सर्गः

गत्वा ततो धवलवृक्षनिरस्ततापं
ग्रामं पुटार्जुनमुदग्वदनां स्रवन्तीम् ।
संसेव्य शङ्करमुमासहितं प्रणम्य
प्रीत्या ययौ स्थलवरं स गजेन्द्रमोक्षम् ॥ १

नक्राक्रमं द्विपवरस्य निराकरिष्णुं
पादैस्त्रिभिः सकललोकमलङ्करिष्णुम् ।
नित्ये सुखे निरवधौ सततं चरिष्णुं
पद्यैर्नवैः शुभपदैः स ननाम विष्णुम् ॥ २

शुक्लैर्यजुर्भिरवनीसुरगीयमानैः
संनादितं तदनु यञ्शबलाग्रहारम् ।
संवर्णयन् दश हरेर्मुदितोऽवतारान्
तुष्टान् गुरुर्द्विजवरान् प्रणतान् स तेने ॥ ३

श्यामां नदीमुपगतामथ ताम्रपर्णीं
पत्युन्मुखीं तटगतः स मुदानुगृह्णन् ।
तत्स्थान् द्विजान् वरगिरा मुदितान् वितन्वन्
गृह्णन्नुपायनमसौ गुरुराननन्द ॥ ४

साम्नां वचांसि यजुषां च मनोहराणि
श्रद्धेरितानि वसुधाविबुधैः स शृण्वन् ।
क्षीरप्रणाल्यभिधमग्र्यतमाग्रहारं
सम्बद्धमाम्रमृदुपर्णसुमैर्जगाम ॥ ५

यं निम्नगा शुभतरङ्गकरैः स्पृशन्ती
मातेव नित्यमधुरं पय आवहन्ती ।
आमोदयन्त्यतिसुखैर्वयसां विरावै-
रास्ते नितान्तमुदितामितसौख्यधात्री ॥ ६

यं मङ्गलेशकरुणामयमङ्गलाम्बा
गन्धर्वदेवमुनिबृन्दसुगीयमाना ।
विद्यां ददत्यभिमतामवति प्रसन्ना
पीतं पयो हि तनुते कवितां भवान्याः ॥ ७

हस्ते वहन् मृगशिशुं नटराजराजो
मृत्युञ्जयो विजयते निकषा यमाद्यः ।
आर्द्रेश्वरः सह गणैर्नटनप्रवृत्ते-
रानन्दनर्तनपरः शिवया समेतः ॥ ८

कश्चित्तदा स्तुतिसुमावलिशोभमानां
पत्रीं गुरोः पदसरोजतले न्यधात् स्वाम् ।
आदाय भव्यमहतीं करुणार्द्रदृष्टिं
भक्त्याहृतं सुमफलं च निरस्तभेदे ॥ ९

प्राज्यार्थदेष्वपि वचःसु दुराशयेषु
हूणोदितेषु न सुता नितरां नियोज्याः ।
इत्यूचिवान् प्रियगुरुर्मखिनीलकण्ठ-
वंशोद्भवं द्विजवरं स कथाप्रसङ्गात् ॥ १०

छात्राः प्रियाः कनकनिर्मितपादपीठी-
मानर्चुरग्र्यमतयः सह निष्कवित्तैः ।
ते चाप्यवापुरधिकां यशसा च लक्ष्मीं
वंशोचितां श्रुतिशिरःकथितां च विद्याम् ॥ ११

आशीर्मयीं शुभसमूहपयःप्रदोग्ध्री-
माबध्य धेनुमपि तत्र वसिष्ठकल्पः ।
आसीदतः शुभहृदो मुदितोऽग्रहारान्
गत्वाददे स नतभक्तजनोपहारान् ॥ १२

गङ्गाग्रहारमधिकोन्नतनालिकेर-
माबद्धमालमभिरूपजनाभिपूर्णम् ।
कैलासनाथकरुणालहरीसमृद्धं
ग्रामं ययौ स गुरुराट् सहवामदेवम् ॥ १३

नित्यं शुभं वितनुते किमु मोदवल्ली
कैलासनाथमहिषी जननी जनानाम् ।
चित्रानदी वहति किं निरवग्रहेयं
सौहार्दमस्ति सहजं किमु सत्यसारम् ॥ १४

पृष्ट्वेत्थमन्यदपि तर्हि विचारणीयं
प्रह्लादयञ्शुभविधायिकटाक्षपातैः ।
भक्तान् बुधान् प्रयतहस्तधृतोपहारान्
बिल्वावृते सुरगृहे स गुरुर्न्यवात्सीत् ॥ १५

श्रीकण्ठशास्त्रिविबुधोऽखिलकार्यदर्शी
त्रैधं धनं गुरुपदार्चनसम्प्रसूतम् ।
देवीगृहाय गुरुशङ्करदेवभूम्यै
विद्यालयाय च समं विदधाति धीमान् ॥ १६

तज्जं वदातमखिलं मनुजान् प्रभूतं
प्रत्येकमेति मिलितं स्थिरसम्पदाढ्यम् ।
प्रत्येकदत्तजलवर्धितपुष्पवाटी
सर्वाञ्जनान् प्रमुदितांस्तनुते हि पुष्पैः ॥ १७

इत्थं प्रसन्नमधुरां गिरमत्युदारां
प्रीत्या ब्रुवन्नियतकर्मसमाप्तिकाले ।
अन्तेवसत्प्रयतभक्तमहाजनेभ्यो
ज्ञानं ददौ सकलदुःखतमोऽपहारि । १८

आयामि यावदुचिताखिलवस्तुपूर्णां
प्रागेव निश्चिततरां प्रथमां पुरं त्वाम् ।
पाण्ड्येषु कर्तुमभिवाञ्छितनावरात्रं
दोलागृहे कुसुमशोभिनि कान्तिमत्याः ॥ १९

धर्माधिकारमहितो बहुदोऽत्र कृष्ण-
स्वामी चिकीर्षति मठं प्रणिधानयोग्यम् ।
सोऽपि क्रमेण परिपूर्तिमियाद्विशालो
द्विस्त्रिर्गुरोरपचितिं स हि संवितेने ॥ २०

आभाष्य चूतनिबिडां पथि शालिवाटिं
भव्यं विधाय महितं पथि पौर्णमास्यम् ।
अम्बासमुद्रनगरं करुणासमुद्रः
प्रापावृतः स बहुयज्वभिरास्तिकाग्र्यैः ॥ २१

श्रेयःपरं गुरुवरं मधुवाक्प्रचारं
शार्दूलचर्मनिहितं हितदं नराणाम् ।
ऊचे गुरुं शुभपराक्षतशोभिहस्तं
श्रीपापनाशधरणीतलदेवतेत्थम् ॥ २२

ब्रह्मन् महन् मुनिवर व्रतसक्तचित्त
द्वैपायनादिमुनिपूजनसम्प्रवृत्त ।
तत्सम्मतं परिविराजति वस्तु पूर्णं
शालाः शुभाश्च मृदुला रचिता विशालाः ॥ २३

ताम्रेक्षुसारसदृशोदकपूरपूर्णा
मध्ये स्रवन्ति पुलिनं शुकवाकप्रधानम् ।
फुल्लाम्बुजातसुभगं विमलं सरश्च
प्रच्छायमद्रिधरणीतटमुच्चवृक्षम् ॥ २४

अभ्यागताग्र्यमनुजावसथाश्च रम्याः
संन्यासिनां वसतये शुचिपर्णशालाः ।
विद्वत्प्रधानभवनं जपपूजनार्हं
सर्वाधिकारिसदनं समबद्धधिष्ण्यम् ॥ २५

आलानमुच्चसुदृढं हयरम्यशाला
गोष्ठं गवामपि भृतं च कडङ्गरीयैः ।
वेदिर्विशालतलभासुरमध्यदेशा
पुंसां तथान्यदपि भाति शुभं समस्तम् ॥ २६

मेध्याजिनादिरचितासनशोभमानः
पूतो नवो बहुविधाङ्गणराजमानः ।
बिल्वप्रसूननवपक्कफलाभिपूर्णो
गुर्वाश्रमोऽपि विलसत्यधिकेक्षणीयः ॥ २७

श्वो भावि रम्यमहकृत्यमुदारचेता
द्वैपायनर्षिसदृशो महितो विधातुम् ।
आगच्छतु प्रथिताशिष्यसमूहवन्द्यः
श्वःश्रेयसाय जगतां नितरां मुदेति ॥ २८

मार्गे गुरुः कलशजातसमानतेजाः
प्रत्युद्गतः श्रुतिशिरोवचनप्रवीणैः ।
विप्रैः प्रहृष्टवदनैः फलरम्यहस्तैः
सज्जीकृतं प्रणवमाप मठं महार्हम् ॥ २९

क्षेत्रे गुरुर्विटपिशोभिनि पापनाशे
स्रोतस्विनीमृदुतरङ्गकणावदाते ।
शृण्वन्नृचो द्विजवरैः परिपठ्यमाना
नानाविधानपरिकर्मितमाप धिष्ण्यम् ॥ ३०

वैतालिका जगुरथ प्रथितं पवित्रं
द्वैपायनर्षिचरितं प्रथितं प्रवीणाः ।
आजघ्निरे भवुकशंसनसंप्रवृत्त-
भेरीमृदङ्गपणवादिकवाद्यमन्ये ॥ ३१

काषायवस्त्रपरिसंवृतदेहयष्टि-
र्भस्मत्रिपुण्ड्किरणाञ्चितफालपट्टः ।
रुद्राक्षभासुरगलो धृतवेणुदण्डः
पीठस्थितः स च बभौ शुचिराश्रमोऽन्त्यः ॥ ३२

निष्कं न्यधुः कतिपये कलधौतपात्रे
मुक्तासमाक्षतचयेन बुधा विशिष्टाः ।
जम्बीरपूगमपि हेमसमानवर्णं
पूजार्हमम्बुजचयेन सुगन्धिनान्ये ॥ ३३

शिष्या यथायथमुपायनमर्पयित्वा
दृष्ट्वा महस्य रचनां च विमानशोभाम् ।
आदाय तीर्थमपि तत्करपद्मपूतं
प्रापुर्निकेतनमलङ्कृतमिष्टभोज्यैः ॥ ३४

एवंविधे चलति तत्र महामहेऽमुं
विद्योतमानमधिवेदि दिदृक्षमाणः ।
उत्को नितान्तमधिपापविनाशभूमि
मन्त्याजगाम विबुधैः सह माधवोऽग्र्यः ॥ ३५

प्रत्युष्णरश्मिदिवसं मनुजा महेच्छाः
शुश्रूषवः शुभविधायिगुरूपदेशम् ।
श्रीशालिवाटिनगरादपि वावदूका
देशान्तरादपि गुरोः शतशः समीयुः ॥ ३६

एकोऽपि तर्ह्यभिमतोऽप्यधिकश्च मासो
जातः सिषेविषुरमुं शुकतातकल्पम् ।
ताम्रापि साधु हृदयप्रभमावहन्ती
शुद्धं प्रभूतमुदकं मधुरं रराज ॥ ३७

वेदिस्थितं विधिहुतं ज्वलितं यथाग्निं
रत्नं महार्घमिव कौस्तुभमब्धिजातम् ।
ज्योतिर्यथा शरवणोदितमर्चनीयं
तं देशिकं परियुयुः शतशो मनुष्याः ॥ ३८

आचार्यदेवमथ सुन्दरशास्त्रियुक्तः
कश्चिद्द्विजः सुगतमार्गपरोऽन्वयुङ्क्त ।
शाकल्यमुग्ध इव तं मुनियाज्ञवल्क्यं
पश्चादवाप सदृशीमपि तस्य रीतिम् ॥ ३९

यन्त्रं सुवर्णमपि मन्त्रलिपिप्रकृष्टं
देवीपदाब्जनिहितं सह कुङ्कुमेन ।
लब्ध्वाप्यभीष्टमधिकं जहृषुर्नितान्तं
नारीजनाः समुपजातसमस्तभव्याः ॥ ४०

अत्रान्तरे करिवरः करशोभिदन्तो
विघ्नेशलोकमनिशं समलंचकार ।
यं सद्गुरुर्महिसुराधिपदत्तमग्र्यं
सुभ्रातृतामधिवहन् सततं पुपोष ॥ ४१

अध्यापयञ्श्रुतिगिरं मधुरां स शिष्यान्
आवेदयन्नपि तदर्थमुदारचेताः ।
सम्भाषयन्निखिलधर्ममुपायभूतं
सम्बोधयन्नपि सुखं विरराज तत्र ॥ ४२

अत्रास्ति दिव्यमहिमा कलशाप्तजन्मा
वन्द्यः समस्तजगतां सहितश्च पत्न्या ।
यः सागरं प्रतिभयं च पपौ क्षणेन
विन्ध्यं गिरिं क्षितितलं गमयाम्बभूव ॥ ४३

यस्योदये भुवि जलं नितरां प्रसन्नं
दिव्यागदेन सदृशं भिषजां वरस्य ।
स्थानं चकास्ति निलयेऽखिलदेवतानां
हुंशब्दतश्च नहुषो धरणौ पपात ॥ ४४

यत्तेजसा परिवृतां ककुभं विवस्वान्
सम्यक् प्रतापनिधिरप्यधिकोज्ज्वलोऽपि ।
अभ्यागतः शिशिरभानुसमानतेजाः
स्पृश्यश्च राजतितमामधिकं नराणाम् ॥ ४५

यो दक्षिणामुपगतः ककुभं मुनीन्द्रः
स्वस्थां चकार धरणीममितप्रभावः ।
कल्याणवेषसहितः परमेश्वरो यं
कल्याणशैलनिलयोऽरचयत् प्रहृष्टम् ॥ ४६

यस्य प्रकृष्टतपसो महतश्च लोपा-
मुद्रा वसिष्ठमहसः सदरुन्धतीव ।
अत्रेर्मुनेरपि यथा प्रथितानसूया
नित्याग्निहोत्ररचनादिषु भाति साध्वी ॥ ४७

भीता द्रवन्ति च यतः कुणपाशसङ्घा
इन्द्रादयो दिविषदश्च यमाश्रयन्ते ।
तुष्टोऽर्चितो मधुफलैः सरसैर्वचोभी
रामो धनुर्दृढमवाप यतश्च वीरः ॥ ४८

रत्नापगा मुनिवरेण च येन दत्ता
रत्नाकरं वितनुते मुदिता समुद्रम् ।
रत्नाञ्चिता मृदुगतिः कुसुमाभिरामा
रत्नानि विद्रुमयुतानि समर्पयन्ती ॥ ४९

यूयं महेशसदृशं कुशलप्रसक्तं
वन्दध्वमद्भुतमुदात्तमदभ्रवीर्यम् ।
चन्द्रार्धचूडपदसक्तममुं मुनीद्रं
ज्योतिर्मयं वरतमं च मुनीश्वराणाम् ॥ ५०

एवं मुनीन्द्रचरितानि निबोधयन् स
प्राज्ञः प्रकृष्टफलदानि महान्ति तर्हि ।
अभ्यर्च्य शङ्करमुमासहितं सरोजै-
स्ताम्रां च नित्यमभिवन्द्य मुदं प्रपेदे ॥ ५१

मीनान् जनो विचरतो विविधान् विचित्रान्
शुभ्रं पयश्च पिबतः सहितान् प्रहृष्टान् ।
कृत्वा कणैरभिनवैः सिततण्डुलानां
तुष्टाव सद्गुरुममुं श्रुतिसक्तनेत्रम् ॥ ५२

एवं व्रतं निरुपमं स वसिष्ठनप्तु-
र्विघ्नेश्वरस्य च महं नितरां विधाय ।
कीर्तिं प्रसार्य विधुकान्तिसमां च पीठ्याः
कल्याणतीर्थमगमज्झरभूषिताङ्गम् ॥ ५३

स्थित्वा तटेऽत्र हिमभूधरशृङ्गकल्पे
  छात्रैश्च भिक्षुनिचयैरधिवेदशीर्षम् ।
सन्निष्ठितं स्थिरमहः सकलावभासि
  ज्ञानं विविच्य कथयन् मुमुदेऽतिवेलम् ॥ ५४

ऊर्ध्वं ततो गिरितटं विशदं विशालं
  बाणाख्यतीर्थपरिवन्दनसक्तचित्तः ।
हारायितैः सितझरैरभिशोभमानं
  प्रापासनायितशिलं च शिलोच्चये सः ॥ ५५

स्नात्वा यथावदुदके मधुरेऽतिशीते
  मन्दाकिनीसदृशवैभवताम्रपर्ण्याः ।
लाजायितैः सुमचयैश्च कणैर्झराणां
  सम्पूरितं तटमवाप शुभं तटिन्याः ॥ ५६

अन्तर्हितैर्मुनिवरैरमरैरुदारै-
  रुच्चस्वरैरपि झरैरुपगीयमानम् ।
श्रीचन्द्रमौलिमभिषेचयितुं प्रवृत्तं
  तं मेनिरे मुनिवरं नितरामगस्त्यम् ॥ ५७

आसायमत्र निवसन्तममुं मुनीशं
  कैलासरम्यशिखरे शिवमर्चयन्तम् ।
तस्थुर्द्विजाश्च परिवर्जिततृड्बुभुक्षा-
  श्चित्रार्पिता इव भृशं समवेक्षमाणाः ॥ ५८

बाणात्मको मधुरिपुर्मुदितोऽस्ति यत्र
यत्क्षेत्रमुत्तममघौघनिबर्हणं च ।
यत्र प्रसूननिचयान्मधु संभरन्तो
माधूकरीमुपदिशन्ति च जीविकां स्वाम् ॥ ५९

भूरि क्षरन्ति शिखरेषु च भूरुहेषु
सुक्षौद्ररम्यपटलानि मधूनि यत्र ।
हारीतपक्षिचरणानतपल्लवौघा
मारीचरम्यलतिकास्तरुमाश्रयन्ते ॥ ६०

यत्र प्रभाससदृशा बहवस्तडागा
गाधेतराश्चलतरङ्गमनोहराश्च ।
एलालवङ्गशुभगन्धिमयः प्रवाहः
शीतः शुचिः प्रवहति प्रसवाभिपूर्णः ॥ ६१

तत्र स्थितं शुकसमौजसमाप्तकामं
कश्चिद्गुरुं स्थिरनिरीक्षिततुङ्गनासम् ।
श्रीकण्ठमुख्यविबुधावृतमत्युदारं
भक्तः शिवे स्वपुरमेतुममुं ययाचे ॥ ६२

यः सम्पदं निरुपमां सुतवित्तसौख्य-
प्रभ्राजितां भृशमवाप गुरूपदिष्टः ।
पूर्वं स्वकीयपुरि तीर्थपतिः प्रहृष्टो
विप्रादिभिर्विनयनम्रशिरा धनाढ्यः ॥ ६३

गोवाजिरम्यकलभप्रविराजमानां
श्रीशृङ्गपल्लिनगरीं ध्वजिनीं गुरुः सः ।
अभ्येत्य षण्मुखसमो गुहदेवगेहे
पूजां परां परशिवस्य मुदा वितेने ॥ ६४

लक्ष्मीर्विभातु मलयध्वजपाण्ड्यपुत्री-
नेत्रप्रभासुरझषाञ्चितताम्रपर्ण्याः ।
तीरे सतस्तव कुमारवराङ्घ्रिभक्त्या
कीर्त्यैति तं पदनतं बहुशोऽन्वगृह्णात् ॥ ६५

अन्वागतस्तदनु तेन शिवादिमेन
ब्रह्मण्यशब्दघटितेन सुमध्यमेन ।
भक्तेन पुष्पनिचयेन सुगन्धिना च
यात्रां चकार मलयादचलाद्गुरुः सः ॥ ६६

लिङ्गाकृतिं क्षितिधरं मुहुरीक्षमाणो
मध्येपथं द्विजवरैरभिनन्द्यमानः ।
श्रीवेङ्कटाभिधमगात् प्रथिताग्रहारं
स श्रीनिवासपददर्शनसक्तचित्तः ॥ ६७

तत्र स्थितं सुकृतसद्मनिभं च कृष्ण-
स्वामी वदावदवृतो धृतिमान् वदान्यः ।
पूर्णो मठो गुरुनृपागममीक्षतेऽद्य
क्षिप्रं त्विति प्रियगुरुं तमुवाच भक्तः ॥ ६८

श्वःश्रेयसेन सकलस्य जगत्स्थलस्य
श्वः सायमेति तरुणेन्दुशिरा महेशः ।
आस्तां महेन महितेन सदाशिवेन
श्रीशङ्करस्य च गुरोर्महतः प्रतिष्ठा ॥ ६९

इत्यादि रम्यवचनं च वदंस्तदुक्तं
प्रीत्येति कृत्यमखिलं मनुजानवोचत् ।
सायंतनी पुरवरे महनीयकान्ति-
रासीन्नितान्तमुदिताखिलसज्जनौघा ॥ ७०

वार्ताहराश्वरणवाहनजागरूका
गुर्वागमं शुभसमागममूचुराद्यम् ।
कम्पानदीं गुरुसमीक्षणनिष्ठचित्ताः
प्रापुर्नराः प्रमुदिताः फलभासिहस्ताः ॥ ७१

मेघे तटित्ततिभृतेऽपि च वर्षसक्ते
दीपप्रभाविलसितं नगरं स पश्यन् ।
आलोकनेन दुरितं सकलं निरस्यन्
स्वस्थो ययौ स च गुरुः पुरि याप्ययाने ॥ ७२

कामं बभूव जलदोऽस्य दशा प्रशान्तः
पूजां वितेनुरखिलाः प्रघणेषु तुष्टाः ।
दृष्ट्या धिया मधुरया च गिरा स पुर्या-
स्तन्वञ्शुभं मठसमीपमगात् क्रमेण ॥ ७३

तत्राम्रपूगकदलीफलशोभमाने
नीराजिताङ्घ्रिकमलः प्रियशिष्यपत्न्या ।
आलम्ब्य हस्तमपि तस्य वदावदस्य
भक्तस्य स प्रविशति स्म मठं नवीनम् ॥ ७४

स ब्रह्मवृद्धपुरमध्यविराजमान-
स्वाम्यालये स्फटिकपट्टशिलाभिरामे ।
दोलागृहे गुरुवरः शुभमातनिष्ट
श्रीनावरात्रमखिलेप्सितसिद्धिदायी ॥ ७५

हंसाश्रितो ध्वजवरश्च तदोच्छ्रितोऽभू-
न्नित्यं सहस्रजनभोजनकीर्तिकल्पः ।
देवी प्रसादमकरोदपि मूर्तिमन्तं
शक्तिं स्विकामपि शुभां भुवि दर्शयन्ती ॥ ७६

दोलागृहेऽधिजनमध्यमसौ यतीशः
काषायसंवृततनुः स्मितभासुरोष्ठः ।
आलोकसेकपरिनन्दितभक्तवर्गः
प्रत्यक्स्वरूपमवभासयति स्म नृणाम् ॥ ७७

श्रीकान्तिमत्युदितकान्तिविभासुरायां
तस्यां सदस्यनुदिनं प्रथयन् सपर्याम् ।
देव्याः समस्तभुवनान्तरदीपिकया
रात्रौ जनानपि ततान च जाग्रतः सः ॥ ७८

अभ्यागतान् प्रणमतो विविधोपहारान्
विन्यस्यतः कनकनिर्मितपादुकायाम् ।
तत्र क्षणे निरुपमे स गुरुस्त्रिलोकी-
मातुः कृपां शुभपदं नितरां निनाय ॥ ७९

रेजे वितत्य नवरात्रमहं जनानां
पूजां समाप्य सकलामपि कान्तिमत्याः ।
श्रीशालिवाटिनगरीशितुरप्यमोघां
आनन्द एव स बभूव तदा जनानाम् ॥ ८०

रत्नापगातटनिवासिनमीशसूनु-
मभ्यर्च्य दण्डधरपाणिकुशेशयं सः ।
श्रीशङ्करं नगरवासिजनार्थ्यमानः
शुद्धे मठे विलसितं गुरुराततान ॥ ८१

पीठेऽभिषिच्य धरणीतलदेशिकेन्द्रं
सौभाग्यदे विजयदे दशमे दिनेऽसौ ।
आवाहयत् सकलदैवतसन्निधानं
देवा वसन्ति हि तनौ यतिशेखराणाम् ॥ ८२

सायं दिवं समधिरोहति शीतरश्मौ
जात्यादिगन्धततिहारिणि वाति वाते ।
श्रीवीरराघवपुरं क्रमशः स गच्छन्
कैलासनामनगरं मधुरं जगाम ॥ ८३

उद्दामवेदवचनध्वनिशोभमाने
नानावितानपरिकर्मितरम्यरङ्गे ।
मुक्तापगातटगते सुमहान् स कृष्ण-
स्वाम्यर्थितो व्यरचयत् परमेशपूजाम् ॥ ८४

कृष्णं गुरुर्महितसंसदि वावदूकं
छात्रालयादिरचनेऽस्य पटुत्वमुक्त्वा ।
भक्त्यादृतं सुकृतिसम्मतधर्मशील-
नामानमेनमकरोत् सह पट्टवस्त्रैः ॥ ८५

सायेऽधिसज्जनसभं विशदैर्वचोभि-
रध्यात्मनिष्ठसरणिं महितां ब्रुवाणः ।
मन्दस्मिताञ्चितमुखः क्रमशः स्वकीयां
प्रादीदृशद्विविधशक्तिममानुषीं सः ॥ ८६

आनन्दभासिषु नरेषु तदाखिलेषु
स्वाम्यन्तिमः सुरगिरा शुचिरामपूर्वः ।
रम्यं गुरोरुपजहार च पत्ररत्नं
स ह्यक्षदर्शकपदे विरराज तर्हि ॥ ८७

धर्मं प्रशासति गुरौ क्रमशस्तथान्ये
पत्रोपहारचतुरा विबुधाः समासन् ।
सम्मानयन् स च बुधान् रजतावबद्धैः
पीताम्बरैः शुभवचोभिरथान्वगृह्णात् ॥ ८८

श्रीशालिवाटिनगरीमधितस्थिवांसं
तं देशिकं वदवरः सहरामचन्द्रः ।
मित्रैर्नृपालपुरुषैः सह जातहर्षैः
कृष्णोदितः परिचचार महोपदाभिः ॥ ८९

एवं बहूनि च दिनानि जगद्गुरुः स
श्वःश्रेयसप्रदवचोनिचयैः पुरीं ताम् ।
सम्मान्य शृङ्गनगरीमिव भक्तिपूतां
सेनानिवेशवरणं प्रययौ क्रमेण ॥ ९०

कश्चिद्दूरान्वयजनिर्धनकोशरक्षी
म्लेच्छो गुरुं तमभिगम्य मुदा विनीतः ।
स्वस्वस्थितिं हिततमोत्तमलाभहेतुं
ज्ञात्वा स्वकीयगुरुमेनमथाभिमेने ॥ ९१

गोपालनामहरिभक्तधरासुरेण
वैकुण्ठनाथसदने विविधोपहारैः ।
अभ्यर्चितो निगमसारमभेदरूपं
स व्याजहार निगमागमसारदर्शी ॥ ९२

पश्चाच्छुभानधिवसन् पथि सोऽग्रहारान्
द्वित्राण्यहानि च जनान् मुदितान् वितन्वन् ।
प्रालेयशीतलपयोनिधिशीकरौघैः
संसेवितां पुरमवाप जयन्त्यभिख्याम् ॥ ९३

दैतेयवर्गदुरितार्तिहर प्रभो ते
कुम्भाभिषेकरचना जगतः शुभाय ।
श्रीशङ्करस्य भविता कलशाभिषेको
जन्मावनौ सकलधर्मपथावनाय ॥ ९४

तत्सिद्धयेऽपचितिमत्र विधातुकामः
सेनापतेस्तव निकेतनमागतोऽस्मि ।
एवं वदन् कटितटेऽस्य समर्प्य पीतं
वस्त्रं सुवर्णखचितं स तथैव तस्थौ ॥ ९५

मुक्ताफलादिसमुदञ्चितभङ्गपूर्णं
सिन्धुं समर्च्य फलपुष्पचयैः स्तवैश्च ।
भास्वत्करप्रसरशोभितटे गुरुः स
तुष्टाव भानुमुचितारुणमन्त्रपूगैः ॥ ९६

भूयः प्रदक्षिणविधिं स गुरुर्वितन्वन्
बद्धोर्ध्वकेशनिचयैः सहितः सुशिष्यैः ।
पादे समर्प्य कनकोज्ज्वलबिल्वपत्रं
श्रीषण्मुखस्य नगरालयमाजगाम ॥ ९७

उत्तुङ्गभङ्गततिभासुरभानुबिम्ब-
प्रद्योतमानमवनीसुरराजमानम् ।
सम्मण्डयन् पुरवरं प्रतिवीथि गच्छन्
शिष्येप्सितानि रचयन् स रराज योगी ॥ ९८

लावण्यपूर्णवदनं स गुरुः कुमारं
सम्पूजयँल्लवणसागरतीरनिष्ठम् ।
लावण्यदं शुचि पयो मनसः प्रयच्छन्
पूतं नृणां च ततये गुहवद्रराज ॥ ९९

नान्दीकरान् विनयबद्धकरान् मनुष्यान्
विश्राणनेन वचसा च मनोहरेण ।
प्राचीनरीतिमनुसृत्य विधाय तुष्टां-
स्ताम्रापयोनिधिसमागममेयिवान् सः ॥ १००

तालीदलैः शणचयै रचिते किरातै-
र्दूरस्थितैः सविनयैर्मुहुरर्थ्यमानः ।
स्थित्वोपकण्ठमुदधेः प्रचिते प्रदेशे
स्नानादिकृत्यमतनोत् स दिवाकराभः ॥ १०१

मुक्तास्रजं वितनुते तव ताम्रपर्णी
शम्भुर्वहत्यधिशिरस्तव सूनुमिन्दुम् ।
पुत्र्या सहास्ति सदने तव पद्मनाभो
रत्नानि वृद्धिमुपयान्ति तवैव गेहे ॥ १०२

इत्यादि रुच्यवचनं स गुरुर्ब्रुवाणः
सिन्धुं प्रतोष्य कुसुमैरपि नालिकेरैः ।
जायासुतादिसहितानपि तान् पुलिन्दान्
वित्तादिना समनुगृह्य ययौ स सोमम् ॥ १०३

तत्रागतान् मनुपराननुगृह्य भक्तां-
स्तैस्तैरुदारधिषणो मनुभिः पवित्रे ।
तीरे विधाय नियमं च स पूर्णिमायां
तुष्टाव सोमशिरसं निगमान्तवाक्यैः ॥ १०४

रात्र्यां ततः कुमुदबान्धवतुल्यतेजा
नानाविधानपरिराजितसोमतीर्थे ।
पूजासमाप्तिसमये प्रणतान् स शिष्यान्
भव्याक्षतादि वितरन् मुदितान् वितेने ॥ १०५

गत्वा क्रमेण नवमाधवदिव्यदेशान्
वैकुण्ठपत्तनमुपेत्य स केशवस्य ।
लक्ष्मीपतेः क्षितिधरेन्द्रसुतापतेश्च
प्रेम्णा ततान सकलां प्रथितां सपर्याम् ॥ १०६

एकादश्या सह सनियमो द्वादशीं तत्र नीत्वा
लक्ष्मीजानेर्नवनवगुरुर्गोपुराणीक्षमाणः ।
कैलासाख्यं पुनरपि पुरं सम्भृतं वाद्यघोषैः
कृष्णस्वामिप्रमुखविबुधैराश्रवैरर्थ्यमानः ॥ १०७

ब्राह्मण्येन श्रवणमतिना सेवितेऽन्तर्यतीशे
तं साहस्रे बहिरुपगते सेवितुं पुष्पसारैः ।
पूजाहेतोर्मधुरनिनदे धैनुके द्वारि बृन्दे
पूजाकालप्रकटनपरः कश्चिदेवं बभाण ॥ १०८

इन्द्रो वर्षत्युदमिव गुरुर्वाक्यमर्थोपक्लृप्त्यै
मार्तण्डोऽसाविव शिवगुरू राजते मध्यसंस्थः ।
ताम्रेवेयं वहति करुणा सद्गुरोरत्र पूर्णा
भक्तिर्नॄणामिव सुमततिः सद्गुरोर्दर्शनीया ॥ १०९

एवं गीतं मधुरवचनं वन्दिनः संनिशम्य
प्राप्योत्कृष्टं कुसुममहितं मण्टपं चन्द्रमौलेः ।
पूजां कृत्वा विधिवदखिलश्रेयसे पूततीर्थं
दत्त्वा सायं शुभमुपदिशन् स प्रयाणोन्मुखोऽभूत् ॥

स्थास्नुर्योगी स्थिरतरसुखे ग्रामपूगं चरिष्णु-
र्द्वन्द्वोद्भूतं सकलमनिशं निःसमानः सहिष्णुः ।
केकाध्वानैः श्रवणसुभगैर्बर्हिणां नृत्यतां स
प्राप ग्रामं सहजमधुरं षण्मुखालोकपूर्णम् ॥ १११

॥ इति श्रीजगद्गुरुसच्चिदानन्दशिवाभिनवश्रीनृसिंहभारतीविजये
पूर्वभागे नवमः सर्गः ॥

## पूर्वभागे दशमः सर्गः

---

विभूतिमाद्यामणिमादिरूपिणीं
विशुद्धमुक्तामणिहारभासुराम् ।
नवाम्बुदाभाच्युतवत्ससंज्वल-
त्तटिल्लतां नौमि कराम्बुजां श्रियम् ॥ १

शुभस्थलस्था भवदागमाद्गुरो
सदन्वयस्था मुनिदेवताश्रिताः ।
तपःपराः पूर्तमखादिकारिणो
वयं भवामोऽवगतात्मदर्शनाः ॥ २

इति ब्रुवन्तोऽथ शुभं वचो जनाः
शुभासनस्थं शुकदेववर्चसम् ।
प्रियाशिषं भानुसमानरोचिषं
समर्पयन्तः कुसुमं ववन्दिरे ॥ ३

अथापरेद्युर्नृपतेर्महामते
र्नरः प्रधानः कुसुमादिसाधनः ।
अनन्तराष्ट्राधिपतेः समुद्यमं
गुरोः समीपे सकलं न्यवेदयत् ॥ ४

जगद्गुरुश्रीमुखमुन्मुखे शुभे
रथे विनिक्षिप्य विमानसंनिभे ।
द्विजादिमुख्यैरधिवीथि भासय-
न्नमोघभाग्योन्नतिमाप मूलकः ॥ ५

अमात्यरामोदितरीतिमाचरन्
स्वपूर्वभूपालधृतां च पद्धतिम् ।
अवेक्षमाणो यतते महीपति-
र्गुरोः सपर्याविधये महामतिः ॥ ६

समादिशद्राष्ट्रमशेषमानतं
धरापतिर्धर्ममतिः शुभायतिः ।
स्थलं स्थलं पूततमं विधीयतां
मनोज्ञसम्भारसमन्वितं त्विति ॥ ७

इति प्रगल्भं वचनं शुभायनं
वदन्तमम्भोजफलादि शोभनम् ।
हरन्तमानम्रममोघभाषणो
जगद्गुरुस्तं प्रमनाः शशास सः ॥ ८

सुनिश्चिता धीरचलापतेः शुभा
समस्तकल्याणयशोविधायिनी ।
अनन्तराष्ट्रामितसौम्यसम्पदे
पुरा समागच्छति चन्द्रशेखरः ॥ ९

इतीरयंस्तस्य करे विधिप्रिया-
पदाम्बुजोद्भूतमनर्घमद्भुतम् ।
ददत् प्रसादं स गुरुर्यथोचितं
तमन्वमंस्त प्रतियातुमुत्सुकम् ॥ १०

लताग्रहारे ललितापदोद्भवं
ललाटधार्यं स वितीर्य कुङ्कुमम् ।
ललाममाबध्य षडाननशितु-
र्ललाग स प्रेष्ठमहीपतिक्षमाम् ॥ ११

गजादयो घट्टकुटीं समागता
विनैव निर्दिष्टपणं प्रवेशिताः ।
गुरोः कृपातः खलु मार्गपर्वसु
क्रमेण गच्छन्ति सुखेन तद्विदः ॥ १२

अधत्त नागालयवासिभूपति-
प्रियाधिकारी गुरवे समर्हणाम् ।
तदा ततः सानुचरो गुरुः क्रमा-
दुपाययौ नागसुरालयं पुरम् ॥ १३

अथाग्रहारे गुरुराश्रमाभिधे
स्वभावमूकत्वनिवर्तकं वटोः ।
मनुं लिलेखाधिरसज्ञमद्भुतं
स सिद्ध एवावततार नूतनः ॥ १४

ततः स बालः सहसा वचोऽब्रवी-
द्गिरां सवित्री स हि देशिकः स्वयम् ।
तदा विदित्वास्य गुरोर्महात्मतां
जनाः समीयुः स्वहिताप्तये गुरुम् ॥ १५

शुचीन्द्रपुर्यां स शचीन्द्रपूजितं
कपालमालाधरमीश्वरं स्तुवन् ।
ययौ महादानपुरं गुरुः प्रियं
सवाङ्मयूपाञ्चितमर्थितो द्विजैः ॥ १६

ततो महात्मा स्थितिभेदवर्जित-
स्थिरापतिश्रेष्ठनिदेशवर्तिभिः ।
स कन्यकाक्षेत्रनिवासिभिर्द्विजैः
सहोपतस्थे जननीं स कन्यकाम् ॥ १७

भिषज्यति प्राक्तनरोगपीडिता-
नपि प्रकामं यमुपाश्रितो मरुत् ।
मरुत्वदाख्यं निकषा महीधरं
तमम्बुधेस्तीरमुपेयिवान् गुरुः ॥ १८

सरित्पतौ सेतुसमानवैभवे
गुरुः स तस्मिन्नतितुङ्गभङ्गके ।
पठन्ननादीरितमन्त्रसञ्चयं
समीरयन् मन्त्रमनादिवाग्भवम् ॥ १९

गुरुः स काश्मीरतटस्थितामिव
श्रुतीरितां कन्यकुमारिकां पराम् ।
समर्प्य मालाः कनकादिनिर्मिता
ननाम तुष्टाव च सस्मितः स्तवैः ॥ २०

स्थिरश्रिये नूपुरमञ्जुलाङ्घ्रये
नितम्बबिम्बाकुरुहेममेखलाः ।
उरोजचञ्चत्सितमौक्तिकस्रजः
श्रियः शिवां तां गुरुवद्दवन्दिरे ॥ २१

गुरुर्निशायामपि कन्यकाम्बिकां
सनिष्कपुष्पैर्नृपवंशवृद्धये ।
समार्चिचद्रक्तसरोजमल्लिका-
सुमादिभिर्दक्षिणभारतस्थिताम् ॥ २२

विकीर्णनानाविधतण्डुलाकृती-
र्विराजिशङ्खाश्रितविद्रुमाश्रिताः ।
विकस्वरा रत्नयुताश्च वालुका
विलोक्य रत्नाकरमस्तवीद्गुरुः ॥ २३

सुरर्षिभिस्तुम्बुरुनारदादिभिः
स कामिनीभिः सुरकिन्नरादिभिः ।
स्तुतां विपञ्चीमुखवादनैः शुभैः
स कन्यकां प्रैक्षत संयमी निशि ॥ २४

त्वमत्र गोकर्णतटे सुरापगा-
सहस्रसंभेदसमागमाकुले ।
तटे च सेतोरनिशं विराजसे
सृजन्नभीष्टानि नृणां निमज्जताम् ॥ २५

कृशानुभान्विन्दुविलोचने शिवे
कृतान्तदूतोदितसाध्वसापहे ।
कृपां विधत्स्वाखिलसिद्धिदायिनीं
कृतेतरोक्तिप्रथिते नृपादिषु ॥ २६

कुमारि लीलारसिकेऽम्बुजेक्षणे
विलासविद्योतितसिद्धिसञ्चये ।
स्मितप्रभाजातरवीन्दुमण्डले
शिवे नमस्ते करुणापयोनिधे ॥ २७

यथैव सिन्धौ विलिनाति बुद्बुद-
स्तथैव चात्मन्यखिलं चराचरम् ।
इति प्रशान्तो गुरुरात्मनि स्थितः
स कन्यकायाः शुशुभेऽग्रतोऽधिकम् ॥ २८

प्रयाति तस्मिन् पथि योगिभूधरे
स्वकैर्द्विजैर्भूपतिमानवैर्वरैः ।
प्रियालुहारीतमरीचवल्लरी-
समावृतोऽद्रिं च सहाययौ महान् ॥ २९

वटाङ्घ्रिवास्तव्यगुरुं स चिन्तयन्
वरद्रुमस्तोमसमावृतेऽध्वनि ।
वरद्विजानीतसुमानि सार्थयन्
वरो यतीनामतृपन्नृपस्थितौ ॥ ३०

महायने पङ्कजनाभपत्तने
भिषग्वरेणाभिमतेन भूपतेः ।
कुमारपर्यायवचःसुशोभिना
विनिश्चितं प्राप स राजमन्दिरम् ॥ ३१

स निश्चितं बाह्यपदार्थबोधनं
गुरुं प्रणम्य श्रुतिशीर्षवाक्परम् ।
समेयिवान् पूर्वसुवृत्तपाकवान्
मनुं प्रसादोऽस्य हि पुण्यसंचयः ॥ ३२

ततो नृपालोत्तममूलतारज-
क्षमापतिक्षेमपरम्परायिताः ।
अवेक्षमाणः फलपुष्पशोभिनी-
र्लताः स भूपाय जयाशिषं ददौ ॥ ३३

घृतस्रवन्त्यादिनदीर्बहूदकाः
कपित्थपूगाम्रतमालसंवृताः ।
स चन्दनाद्रिप्रभवा विलोकय-
न्नृपस्य धर्मोन्नतिमन्वमोदत ॥ ३४

पुरं समायास्यति पूर्णिमादिने
प्रगे गुरुः पङ्कजनाभसन्निभः ।
विशुद्धवेषाः सह मन्त्रिणा नदी-
प्रपातमायान्तु जनास्ततः पुरा ॥ ३५

इति प्रियं शासनमुर्वरापते-
र्मुदा वहन्तः शिरसा जनाः समे ।
प्रगे समर्च्याम्बुजनाभमागता-
स्तटं तटिन्याः शुचिवेषभासुराः ॥ ३६

विधुः समायाति कलानिधिः पुरा
निशामुखे लोकगुरुं विलोकितुम् ।
अहं त्विदानीं विलुलोकिषुस्त्विति
प्रियं गुरुं स न्यदधात्तदा रविः ॥ ३७

नवोदितं व्योमविहारतत्परं
त्रायीतनुं सर्वविलोचनं रविम् ।
गुरुं च वर्चस्विनमर्घ्यदायिनो
जना विलोक्य स्तिमितास्तदाभवन् ॥ ३८

बुधा रसापूर्णघटादिहारिणो
मुकुन्दपादार्पितमालिकाधराः ।
गुरुं प्रणम्यावनिपालचोदिता
द्विजातयो वेदवचो जगुर्मधु ॥ ३९

ततो धरादेशिकहस्तपङ्कजे
निधित्सवः पुष्पफलादिकं जनाः ।
समीपमागन्तुमपारयिष्णवः
परस्पराघट्टनतस्तदाभवन् ॥ ४०

स राजगोपालमुदारधीयुतं
पदानतं द्वादशपुण्ड्रशोभिनम् ।
विलोक्य निक्षिप्य नृणां शिरःस्थले
शुभाक्षतान् मन्त्रिणमेवमूचिवान् ॥ ४१

जनोपमर्दोऽस्ति महान् समुत्थितो
नमन्तु चित्तेन नवेन्दुशेखरम् ।
स चेश्वरः संविदधाति मङ्गलं
हृदन्तरस्थो भगवान्नृणां मुदा ॥ ४२

नरान् प्रहृष्टः सचिवः समादधे
ततो मनुष्याः कुसुमानि चार्पिपन् ।
तदीयनामादि स शुश्रुवान् गुरुः
परं ननन्दुः सकलाश्च मानवाः ॥ ४३

वहन् किरीटादिमणिप्रभावृतं
स शारदावंशपरम्परागतम् ।
समारुरुक्षुः शुभवाहनं यदा
मुदोद्यतो हाटकनिर्मितं गुरुः ॥ ४४

तदा शतघ्नी व्यनदत् समुच्चकै-
र्मुहुर्मुहुर्मङ्गलवाद्यनिःस्वनैः ।
सशङ्खचिह्नोत्तमशीर्षवेष्टनाः
करात्तदण्डाः शतशो ययुर्जनाः ॥ ४५

गजा हयाः पत्तिजनाश्च संयुताः
सशस्त्रहस्ता मुदिता ययुः पुरा ।
मृदङ्गघोषादिसमन्विता ययौ
सभा गुरुस्तोत्रपरा च सुस्वरा ॥ ४६

स्थिताः तटिन्याः प्रभृति प्रभासुरा
जनाः प्रशान्ताश्च निरन्तराः पथि ।
ससम्प्रदायं वनिताजना नता
धृतोर्ध्वचूडा जयशब्दमूचिरे ॥ ४७

पदे पदे स्वागतवाचिनो बुधा
गुरोरुदारामपि शुश्रुवुर्गिरम् ।
वणिग्जनाः पण्यपथे फलादिकं
समर्पयामासुरमूल्यमादरात् ॥ ४८

गुरुश्च दृष्ट्या वचसा शुभाक्षतै-
र्मुदानुगृह्णन् विनतान् द्विजादिमान् ।
जनान् करप्रोज्ज्वलदक्षमालिकः
समाययौ सालसमीपमेदिनीम् ॥ ४९

विदेहदेशाधिपसन्निभो महान्
किरीटहारादियुतोऽथ मूलकः ।
उदारबुद्धिर्बिरुदैः समन्वितो
धृतोपहारो गुरुसन्निधिं ययौ ॥ ५०

शरीरिणीं भक्तिमिव स्थितां परां
पुराणभूपार्जितपुण्यसंहतिम् ।
समर्पयामास सुमोच्चमालिकां
स याज्ञवल्क्योपमसद्गुरोः पुरः ॥ ५१

स रत्नहारेण रतिप्रियोपमं
विशुद्धभस्माञ्चितफालपट्टकम् ।
नृपालमौलिं समशोभयद्गुरु-
र्गिरिं झरेणेव विशालवक्षसम् ॥ ५२

स यक्षराजोपममर्घ्यदायिनं
सदाशिवाभस्तमनन्तभूपतिम् ।
शरीरिणं धर्मचयं महामतिं
शशिप्रभं पोषयति स्म चाक्षतैः ॥ ५३

यथावदभ्यर्चितलोकदेशिको
विशुद्धमुक्तामणिहारभासुरः ।
स पद्मनाभोत्तमचिह्नभूषणो
वरौजसा सौधमुपागमत् सह ॥ ५४

ततो नृपालानुचरा गुरूदिताः
समागताश्चन्द्रमसं करा इव ।
उपेत्य सौधं नृपतिः स मूलको
गुरुं हृदि श्रीपतिमेव चिन्तयन् ॥ ५५

नृणां समाजं समजं च पक्षिणां
तरुस्थितानामपि हर्षयन् दृशा ।
गुरुः स गच्छन् विपणौ समन्त्रिको
विवेश सालं शुचितोरणस्रजम् ॥ ५६

चलज्झषस्तोमसमानतानत-
प्रबुद्धराजीवसमूहसम्भृतम् ।
सरः स पद्माभिधमम्बुजेक्षणः
प्रभासकल्पं मुमुदे विलोकयन् ॥ ५७

सुवर्णसच्छायफलव्रजानत-
प्रकृष्टरम्भायुतसौधभासुरम् ।
पुरं स मेने भुवि पुण्यशालिनां
नृणां सुखायैव कृतं च वेधसा ॥ ५८

गुरुर्निरीक्ष्योन्नतरम्यगोपुर-
प्रभासि वैकुण्ठसमं पुरं शुचि ।
रजोविहीनं वितमश्च दीर्घिका-
प्रदीपरम्यं मुमुदे स सात्त्विकः ॥ ५९

समस्तरोगापहपक्षिराड्ध्वजं
सुगन्धिमध्वाज्यपयःसुमाञ्चितम् ।
ऋचश्च सामानि यजूंषि गायतां
स्वरैर्द्विजानामपि शोभितं सदा ॥ ६०

विशुद्धभोज्यान्नसमूहसम्भृतं
सहस्रनामादिनिनादपूरितम् ।
सपद्मनाभालयमद्भुतश्रियं
निरीक्षमाणः प्रययौ पुरे गुरुः ॥ ६१

गुरुः स राज्ञीपतिसौधमुन्नतं
समाश्रितः केरलवर्मपूजितः ।
समाययौ सौधवरं पताकिनं
मुदोत्तरंणामरदेवसद्मनः ॥ ६२

गुरोः पदाब्जे विरराज पत्रिका
महाबुधश्रीगणपत्युदीरिता ।
रसोन्नता स्वागतिकी सुसंस्कृता
विराजते यत्कविता गुरुप्रिया ॥ ६३

स राजगोपालममात्यमादरा-
द्विसृज्य भव्याशिषमक्षतश्रिया ।
अथापरान् राजनरान् विभास्वरान्
विसर्जयामास मुकुन्दसन्निभः ॥ ६४

दिवो रवौ मध्यमधिश्रिते परं
निमज्जनायाङ्गणमेयिवान् गुरुः ।
सहापरे श्रीयुतकण्ठशास्त्रिणा
स्वकं विशालं सदनं समागताः ॥ ६५

महः प्रदीपेषु रविः समर्पयन्
ययौ दिनान्ते गुरुभूजनालये ।
समिन्धयन्निन्दुरपि क्षपामुखे
समुद्ययाविन्दुशिरोऽवलोकने ॥ ६६

क्षपामुखे पुष्पभरादिहारिणः
समेत्य सौधं गुरुराजभासुरम् ।
पृथक् पृथक् चत्वरमाश्रिता जना
दिदृक्षमाणा गुरुहस्तगं शिवम् ॥ ६७

मृदङ्गगम्भीररवस्तदाभव-
द्विपञ्चिकागानमृदुस्वराञ्चितः ।
गरुः किरन् हासकरान् समन्ततो
नवेन्दुकल्पः समितिं तदाविशत् ॥ ६८

तदाङ्गविन्यासपुरःसरं गुरौ
शिवाभिषेकं विधिवद्वितन्वति ।
श्रुतीश्च जेपुः शतशो द्विजातयः
सुखस्वराः सम्मदपूरितान्तराः ॥ ६९

अथार्चयन्तं गुरुमिन्दुशेखरं
सुगन्धिभिर्बिल्वदलैः सपुष्पकैः ।
निरीक्ष्य तस्थौ जनता च चित्रता
निमेषहीनान्तरतत्त्वदर्शिनी ॥ ७०

सुमं प्रसादं सकलेष्टसिद्धिदं
सकुङ्कुमं संसृतिभेषजं शिवम् ।
अवाप्य सन्तोषपरम्पराश्रिता
जना न शेकुश्चलितुं पदात् पदम् ॥ ७१

ततः परेद्यव्यवनीपतीश्वरो
ज्वलद्विकीर्णार्णववालुकाञ्चिते ।
विशुद्धवेष पथि सञ्चरन् पदा
गुरुं दिदृक्षुः सितसौधमागमत् ॥ ७२

तदोपवेष्टुं कथितोऽपि भूपतिः
पुनः पुनः स्थातुमसौ मतिं दधौ ।
स पद्मनाभं श्रुतिशीर्षपूरुषं
तमादिदेवं नितरामचिन्तयत् ॥ ७३

ततोऽनुयुज्याखिलमङ्गलं गुरु-
र्विवेकवैराग्यशमादिसाधनम् ।
निरूच्य विद्यामपि शाश्वतीं मुदे
श्रुतीरितां भूपमुवाच मूलकम् ॥ ७४

इदं हि राज्यं प्रथमं महीतले
श्रुतीरितो धर्मपथश्च शाश्वतः ।
सुरक्ष्यतेऽद्यापि भवत्कुलोचित-
स्त्वयापि लक्ष्मीपतिपादसेविना ॥ ७५

सदा हि धर्मेण विराजते मह-
त्समस्तदेशेष्विदमेव राष्ट्रकम् ।
तथैव भूयोऽपि भवत्समो नृपः
पुरा भवत्यम्बुजनाभपूजया ॥ ७६

इति प्रगल्भं मधुरं वचोऽर्थवत्
प्रभाषमाणेऽखिलदेशिके नृपः ।
उपाहरन्निष्कसहस्रमादिमो
धरापतीनां कुलशेखरो यथा ॥ ७६

गुरौ प्रशस्ते विषयेऽत्र तिष्ठति
प्रियार्हणां राष्ट्रमिदं चिकीर्षति ।
इति ब्रुवाणो नृपतिः समादिशत्
सहस्थितं मन्त्रिणमिष्टकारिणम् ॥ ७७

गुरुं प्रणम्याथ वरो महीक्षितां
सरोजमालां सहरत्नमालिकाम् ।
वहन् गले कीर्तिमिवातिभासुरां
ययौ स्वसौधं त्रिदशाधिपो यथा ॥ ७८

नृपाज्ञया तर्हि नृपाधिकारिणो
वराश्च शिष्या मुदिता वितेनिरे ।
गुरोर्नमस्यामधिसौधमीप्सितां
महोपदाभिर्महिलादिसंयुताः ॥ ७९

शुभंयु सायं विविधं च वाङ्मुखं
श्रुतीरितं तत्त्वसुधाकरं नृपः ।
दिने दिने श्रोत्रपुटेन सम्पपौ
गुरुप्रदत्तं बुधबृन्दनन्दितः ॥ ८०

नृपात्मजे केरलवर्मसंयुते
सभर्तृके मङ्गलसन्ततिप्रदम् ।
मनुं गुरोर्यन्त्रयुतं सह श्रिया
विरेजतुः सम्परिगम्य सन्नते ॥ ८१

समर्प्य रत्नानि सुराङ्गनोपमे
क्षितीशकन्ये धृतनूतनांशुके ।
व्यराजताङ्के शतरङ्गशोभिते
गुरोः पुरस्तान्नृपवंशदेवते ॥ ८२

सुवर्णवल्लयाविव राजकन्यके
प्रसूनमालाततिसन्नतांसके ।
गरुप्रदत्ताक्षतभासुरालके
फलाञ्चिते सौधमुपेयतुः स्वकम् ॥ ८३

कविर्नृपः केरलवर्मनामकः
कविं प्रचेतस्तनयायितं गुरुम् ।
प्रणम्य निष्कादि समर्प्य चाग्रतो
बभौ मुदा राङ्कभासिविग्रहः ॥ ८४

दिने दिने तत्र यथायथं चर-
न्ननन्तराष्ट्राय ददच्छ्रियं पराम् ।
गुरुर्निनायाखिलशिष्यसंहतिं
श्रुतीरितं धर्मपथं हरिर्यथा ॥ ८५

स तत्र विद्वज्जनमण्डलीं वरैः
प्रतोषयन् कङ्कणनिष्करल्लकैः ।
सदाशिषान्यानपि कुङ्कुमाक्षतै
रराज पीताम्बरतुल्यवैभवः ॥ ८६

नृपालमौलिर्विबुधान् मठस्थिता-
नमानयत् कङ्कणहेमवस्त्रकैः ।
यथायथं शास्त्रविचारणापरः
सदस्युदारान् कुलशेखरो यथा ॥ ८७

समुन्नताश्वत्थधरारुहावृतं
सरोजतीर्थं निकषालये शुभे ।
समन्वितो भागवतैः समर्चितुं
सरोजनाभं स ययौ मुनीश्वरः ॥ ८८

अथैकपाषाणतलं स मण्टपं
विशालमभ्युन्नतहेमवेदिकम् ।
उपेत्य विप्रर्षिवसिष्ठसन्निभः
समस्तवीत् पङ्कजनाभमीश्वरम् ॥ ८९

रमाङ्कविन्यस्तपदाब्जमीश्वरं
भुजङ्गशीर्षोज्ज्वलरत्नभासुरम् ।
जनार्दनं पीतसुवर्णवाससं
स देशिको नारदवत् समार्चिचत् ॥ ९०

क्रमेण सम्पूज्य नृसिंहमन्तिके
विपञ्चिकावेणुमृदङ्गवादकैः ।
अभिष्टुतं कृष्णमपि स्तुवन् गुरु-
र्द्विजैः सहस्रैः शुकवन्मुनिर्ययौ ॥ ९१

नृपं च नेपालधराधरोपमं
प्रणम्रमाशास्य शुभाक्षतादिभिः ।
पुनः पुनर्मञ्जुलभाषणादिभि-
र्गुरुः प्रयाणाय मतिं चकार सः ॥ ९२

स राजगोपालमुखान् गुरुस्तदा
श्रुतीरितेऽर्थे स्थितिमुत्तमां ब्रुवन् ।
महत्त्वमुक्त्वा धरणीपतेः स्थिरं
समाह्वयद्भाविमहाय सन्नतान् ॥ ९३

अथ प्रयाणध्वनिनादिते पुरे
दिदृक्षमाणास्तमशेषदेशिकम् ।
सहस्रशस्तस्थुरतिप्रियाः पथि
प्रशस्तलक्ष्म्यै मनुजाः समन्ततः ॥ ९४

स्थितिर्गुरोस्तत्र समागमे यथा
प्रयाणकालेऽपि तथैव सम्बभौ ।
परं तु सर्वेऽपि जनाः समुत्सुकाः
सहैव जग्मुर्गुरुणा हृदा द्रुतम् ॥ ९५

गच्छन्तं धरणीगुरुं सहरमं श्रीपद्मनाभं तदा
मुक्ताविद्रुमशोभिभङ्गनिकरैः संवीजयन् सागरः ।
क्षेत्रं भव्यजनार्दनं परिययौ संसेवितुं सादरं
साकं चन्दनभूधरेण कुटजश्रीवृक्षसंशोभिना ॥ ९६

रम्ये विद्रुमभासुरे शुभकरे रत्नाकरे श्रीधरे
स्नात्वा कृत्यमभीप्सितं विरचयन् सर्वं यथावच्छुभम् ।
तीरे सर्वसुरेश्वरं मधुरिपुं तीर्थप्रभास्वत्करं
स्तुत्वा व्याघ्रपुरेश्वरालयमगात् सद्यो जगद्देशिकः ॥ ९७

क्षेत्रे तत्र समर्च्य भस्मसहितैर्बिल्वैस्त्रिपर्णैः शुभै-
र्देवं शंकरमीश्वरं परपरं सर्वं जगत्कारणम् ।
आदित्यादिविभासकं गुरुवरः शर्वं महान्तं मुदा
भक्तं सर्वरसान्वितं परिददद्रेजे जगद्देशिकः ॥ ९८

मार्गे तर्हि वनीपकानपि जनान दानैरभीष्टैर्युतान्
कृत्वा मौनिजनैर्नृपालमनुजैः संस्थानविद्वज्जनैः ।
साकं शंकरदेशिकेन्द्रदयितश्रीकुम्भसेकोत्सुकः
पूर्णोपान्तविराजमानमगमद्ग्रामं शुभं भापुरम् ॥ ९९

॥ इति श्रीसच्चिदानन्दनृसिंहभारतीविजये
पूर्वभागे दशमः सर्गः ॥

॥ पूर्वोभागः समाप्तः ॥



# पूर्वभागगतशुद्धपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ii | १७ | अतिगहना- | अतिगहनाना- |
| iv | २० | पावनेऽषन्वये | पावनेऽन्वये |
| ,, | २१ | -सासादित | -सादित |
| xxi | १२ | प्रमितथवुका | प्रथितभवुका |
| xxv | १३ | समयनिभृताद | समयनिभृतान् |
| ,, | १९ | -ध्याननिपुणाः | -ध्ययननिपुणाः |
| ४ | ६ | -दधि- | -दनिधि- |
| ११ | ६ | पुरत | पुरतः |
| १७ | ३ | -रस- | -झर- |
| २१ | ३ | भूमिं लक्ष्मीमिव | भूमेर्लक्ष्मीमिव |
| २२ | २ | सिद्धशरणे | सिद्धिशरणे |
| ३० | ६ | निष्ठं- | तिष्ठं- |
| ४० | ७ | -मुकुर- | -मुकुट- |
| ,, | १४ | दैव्या | देव्या |
| ४८ | १० | सत्त्विको | सात्त्विको |
| ५० | १८ | दत्त्वा | प्रादात् |
| ६३ | १७ | लसतु | लषतु |
| ६५ | ९ | प्रणम्य | समस्तं |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६७ | २ | भवेत् तु | भवेत् |
| ,, | १५ | -चित्रा | -चित्ता |
| ७० | ७ | निषेव्यं | निषेव्य |
| ७३ | ७ | पुस्फोटास्य | पुस्फोरास्य |
| ७७ | २० | वाञ्छे- | वाञ्छ- |
| ११४ | १ | भ्रुवन्ना- | भ्रुवत्या- |
| १३५ | १ | महादिमेवं | महादिदेवं |
| १३६ | १८ | गाश्चारयन्त | गाश्चारयन्तं |
| १३७ | १६ | -मेहत्या | -मेहात्मा |
| १४२ | १ | मधुदयवचः | मधुमयवचः |
| १४३ | १३ | सदां | सभां |
| ,, | १७ | -लोकमागतनां | -लोकादागतानां |
| १४७ | ३ | वल्गयन् | वल्गूयन् |
| १५० | १४ | पठन्नार्य- | पठन्नार्या- |
| १५९ | १९ | प्रथिता- | प्रथित- |
| १६४ | १७ | वसिष्ठनप्तु- | शक्तिनप्तु- |
| १७० | ९ | निवसिन- | निवासिन- |
| १८० | १७ | -ভূম্রये | -ভূম্রयो |
| १८२ | ९ | प्रायाति | प्रयाति |
| ,, | १३ | -वास्तव्या- | -वास्तव्य- |
| ,, | १४ | वरद्रुम- | वटद्रुम- |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १८३ | १ | बाह्य- | ब्राह्म- |
| ,, | १० | -तमालतसंवृताः | -तमालसंवृताः |
| १८४ | ४ | गुरं | गुरुं |
| ,, | ६ | त्रायीतनुं | त्रयीतनुं |
| १८७ | १५ | उपेत्य | उपैति |
| ,, | ,, | स | स्म |
| १८९ | ४ | -सद्मनः | सद्म च |
| १९३ | १६ | राङ्कभासि- | राङ्कवभासि- |

॥ श्रीः ॥

# श्रीजगद्गुरुसच्चिदानन्दशिवाभिनव-नृसिंहभारतीविजये

ताम्रातीरस्थपालामडैग्रामवास्तव्य-
विश्वामित्रगोत्र-महोपदेशक-
राजवल्लभशास्त्रि विरचिते

## द्वितीयो भागः ।

मदरास् मैलापूर् नगरस्थ-
श्रीबालमनोरमामुद्रायन्त्रालये
मुद्रितः

१९३४

श्रीरामो विजयते ।

# श्रीसच्चिदानन्दनृसिंहभारतीविजये

## द्वितीयो भागः ।

नमः श्रीशारदापीठमाणिक्याय महात्मने ।
ब्रह्मविद्याद्वितीयाय चन्द्रशेखरयोगिने ॥ १ ॥

श्रीसच्चिदानन्दनृसिंहभारती-
जगद्गुरुश्रीविजयाभिधानकम् ।
श्रीशारदापादसरोजरञ्जितं
विभाति काव्यं गुरुराजनन्दितम् ॥ २ ॥

श्रीताम्रपर्ण्युत्तरतीरभासुर-
क्षीरप्रणाल्युज्ज्वलनामशोभिनि ।
ग्रामे वसन्काव्यमपूर्वकान्तिदं
गुरोः पदे न्यस्यति राजवल्लभः ॥ ३ ॥

शिष्यप्रियः श्रीयुतचन्द्रशेखरो
जगद्गुरुः काव्यमिदं पदाब्जयोः ।
समर्पितं सर्वसमोऽभिमन्यतां
भक्त्येकनिष्ठाः खलु देशिकाः सदा ॥ ४ ॥

सर्वेशानं हिमगिरिसुताभाग्यसर्वस्वभूतं
सर्वाचार्यं सकलफलदं चन्द्रलेखावतंसम् ।
सर्वाधारं निटिलनयनं वेदशीर्षैकगम्यं
सर्वं वन्दे परमपुरुषं सच्चिदानन्दमूर्तिम् ॥ ५ ॥

क्वाहं मन्दः कविकुलपथप्रेक्षणे पङ्गुपङ्गुः
क्व प्रेष्ठास्ते ध्वनिपथगतौ पुष्पकारोहशीलाः ।
भक्तिं यष्टिं गुरुचरणयोर्भाग्यलब्धां दधानो
गच्छंस्तस्मिन्पतनविवशो हास्यतां यामि यामि॥६॥

वाल्मीकिं प्रणमामि रम्यकवितास्थानं पुराणं कविं
वागर्थोभयचिन्तनप्रवचने नूत्नं महादेशिकम् ।
सव्यं दक्षिणमीशितुः शिवमयं ध्यातुं जनानां मुनि-
र्योऽध्यक्षं महनीयरूपमदिशद्वागर्थरूपात्मकम् ॥७॥

कविं व्यासं नौमि श्रुतिपदतदर्थद्युतिपदं
मुनिं स्वात्मानन्दप्रचुररचनां स्वाद्यकविताम् ।
दिशन्तं वाग्देवीचरणकमलाराधनजुषां
गुरुं विद्यारूपं सरसकविताराज्यचतुरम् ॥८॥

रसं भावं नानास्वरसरचनां रीतिमुचितां
स्वभावप्रोद्भूतां निखिलजननीस्तन्यमधुराम् ।
पदार्थानां भूयो विनिमयविधिं चापि ददतीं
कवीनामाद्यानां सुकृतमहतां नौमि चरणौ ॥ ९ ॥

या मोहयत्यभिनवैर्मृदुलैर्वचोभिः
  सम्यङ्निवर्तयति बाह्यकलासु बुद्धिम् ।
कालं विशालमपि या त्रुटिकार्धतुल्यं
  रामा नयत्यभिनवेव विशालनेत्रा ॥ १० ॥

प्राणादिबन्धमतिमात्रकृतोपवासं
  खेदं विनैव परमात्मसुखोपलब्ध्यै ।
यामाश्रयन्ति विबुधाः सुकृतेन योगं
  सन्दर्भणे कृतधियो वचसां वचोभिः ॥ ११ ॥

तां देवतामनिथमां वचसामसीमां
  सीमामनेकजनिसिद्धमहाव्रतानाम् ।
सालंकृतिं सुविशदां सुपदां प्रसिद्धां
  नौमि प्रकामशुभदां कवितामिधानाम् ॥ १२ ॥

आरम्भः

वन्दे गुरुं स्वरविभासुरसर्वशाखे
  पूर्णातटे प्रणवगेहमहं गतेहम् ।
तं व्युप्तकेशमभिपूरितदेवताशं
  यः शङ्करो हितकरो विचचार विश्वम् ॥ १३ ॥

वन्दे प्रवालमृदुलाङ्गुलिवाद्यमान-
  वीणानिनादलहरीचलमीननेत्राम् ।
तां भारतीमनिदमादिवचोविलासां
  या शङ्करप्रियवचःसरणीमवाप ॥ १४ ॥

सच्चिद्गुरुस्तदनु तत्र भविष्यवेदी
साक्षिण्यशेषजगतां निहितान्तरात्मा ।
स्मेराननः सकलनिर्जरसम्मतज्ञः
सर्वोत्तमां गुरुमहस्थितिमन्वियेष ॥ १५ ॥

देवालयद्वयमुखं निखिलं तदानीं
पूर्वोदितक्रमयुतं किल कालटीयम् ।
आचार्यशुद्धहृदयोपममाविरासीत्
सद्यः सृजत्यभिमतं ननु योगिशक्तिः ॥ १६ ॥

एकं तयोरतिगुणं सह कन्यकाभिः
प्राच्यां गृहं भवुकधाम विधिप्रियायाः ।
श्रीशङ्करस्य निखिलागमतत्त्वरूपं
हंसध्वजं गृहमभूदपरं प्रतीच्याम् ॥ १७ ॥

आर्यास्थलं शुभफलं पुरतश्च देव्याः
संस्कारमाप जननी यतितश्च यत्र ।
सोपानपङ्क्तिरपि सर्वजनानुकूला
गङ्गातटप्रतिमदिव्यनदीप्रतीरे ॥ १८ ॥

पूजादिकृत्यसदृशो विपुलो मठोऽभूत्
यस्मै गुरुः स्पृहयते प्रणिधाननिष्ठः ।
देवालयादि निखिलं शुचि दाक्षिणास्यं
नद्यास्तटे परिविराजति दिश्युदीच्याम् ॥ १९ ॥

स्वाशिःसमुच्चयफलायितरामचन्द्र-
प्रज्ञोज्ज्वलं सकलमेव तदा विदित्वा ।
स्वामी स्वबाहुसदृशं निपुणं क्रियासु
श्रीकण्ठशास्त्रिणमशात्स भविष्यकार्ये ॥ २० ॥

भृत्यापराः कतिचिदेव नियोज्यवर्गाः
केचिद्विनैव पणमत्र विशालचित्ताः ।
ताम्रातटादपि परे मनुजाः समीयुः
को ज्ञातदेशिककृपः पणमन्यमिच्छेत् ॥ २१ ॥

उत्पेदिरे समतला बहवो विशाला
मार्गा गृहाण्यभिमतान्यभितः पथस्तान् ।
वस्त्वातिथेयमभवत्प्रतिगेहमग्र्यं
नाकागतं किल जनाः प्रतिपेदिरे यत् ॥ २२ ॥

नामानि तेषु लिखितानि गृहेषु तेषा-
मावेशिकाः प्रतिवसन्ति च येषु ये च ।
हर्म्याणि भूपतिहितानि कुथास्तृतानि
प्रत्यग्रचित्रपटवेश्मयुतानि चासन् ॥ २३ ॥

वस्तु प्रशस्तमथ कृत्यविदग्रयायी
श्रीवेङ्कटेशविबुधो घृततण्डुलादि ।
अङ्गीचकार समयेऽर्पयितुं समग्रं
कौम्भाभिषेकिकमदभ्रमनेकरूपम् ॥ २४ ॥

अंहोविहीनमतयः कतिचित्सुशीला
माध्वीकतुल्यवचसो मनुजाः कुलीनाः ।
अभ्यागतान्बहुविधान्गुरुपादभक्तान्
शुश्रूषितुं गुरुमहे तरसाभ्युपेयुः ॥ २५ ॥

देव्या गिरां भगवतश्च गुरोः प्रशस्तं
कुम्भाभिषेकमवुकं जगतः शुभाय ।
स्याद्द्वादशीं प्रियतमे हि कलां निशायाः
प्राप्ते च मासि तपसि प्रियसौम्यवर्षे ॥ २६ ॥

इत्याज्ञया नवगुरोरथ मुद्रयित्वा
पत्रीं तपोविधुनिभां प्रथमाधिकारी ।
भूपान्प्रभूनधिकृतान्विबुधांश्च शिष्या-
नाकारयन्निपुणधीर्विससर्ज काले ॥ २७ ॥

शिष्ट्या नृपस्य भिषजः प्रथमे पुरोगा
नैस्त्रिंशिका भटजनाः सहदंशिताश्च ।
अभ्यागमन् गुरुपदाम्बुजसक्तचित्ताः
कुम्भाभिषेकमहकृत्यविचारणाय ॥ २८ ॥

प्रागेव पाण्ड्यमनुजा गुरुराजवाणी-
सारप्रसन्नहृदयाः स्वयमात्तकृत्याः ।
तस्थुर्मुदा कुशलकर्माणि चैवमन्ये
त्रायमाणगुरुमानसवृत्तिकल्पाः ॥ २९ ॥

उच्चावचं क्रतुभुजामतिमोदहेतुः
सिद्ध्यैव सृष्टमधिकालटि देशिकस्य ।
कुम्भाभिषेकविभवोचितकान्तिकान्तं
स्वच्छं समस्तमुदपादि दिवीव वस्तु ॥ ३० ॥

वार्ताहरादवगतोत्सवसर्वकृत्यः
पूजां विधाय विधिवद्दिनजां क्रमेण ।
स्वप्नग्ददर्श पतिहीनवधूपयुक्त-
चिह्नामपि स्मितयुतां महिलां स कांचित् ॥ ३१ ॥

एतामबोधि यतिभूपतिरावसन्तीं
मूलं तरोः सुरभिपुष्पसमन्वितस्य ।
नाह्वाय तं शुभमतिः स यतिः शशाक
स्वप्नं विमर्शनपरोऽप्यधिगन्तुमित्थम् ॥ ३२ ॥

औत्सुक्यमुद्रितहृदि स्तिमिते चिराय
स्वप्नस्वभावपरिमार्गणतत्परेऽस्मिन् ।
श्रीकण्ठशास्त्र्यभिययौ सहरामचन्द्रो
वक्तुं प्रवृत्तमखिलं गुरुसन्निधानम् ॥ ३३ ॥

वाण्यालयस्य पुरतो भुवमार्यमातुः
संस्कारकर्मपरिपूततमां क्रमेण ।
शृण्वन्नशोकतरुमूलतले तदुक्तां
रोमाञ्चितः समभवत्स चिरादुदश्रुः ॥ ३४ ॥

स्वप्नं गुरुस्तदनु तद्विशयं विवृण्व-
न्नाचार्यमातरमिमामपि तत्र दृष्टाम् ।
तत्संमतिं च नितरां प्रकृते महेऽस्मिन्
तत्रैमि कर्तुमखिलान्युषसीत्यवोचत् ॥ ३५ ॥

वैतालिकैः सह गुरुः पथि चारुनादैः
हंसादिभिर्द्विजवरैस्तरुषु प्रभाते ।
उद्गीयमानमहिमा मरुता प्रसून-
संभेदमोदभरितेन ययौ नतः सः ॥ ३६ ॥

माघे प्रगे शशिनि याति कलां द्वितीयां
श्रीकालटीं सकलमङ्गलवाद्यघोषैः ।
पूर्णां निरन्तरविसृत्वरकान्तिकान्तां
कुम्भाभिषेकविधये गुरुराड्ययौ सः ॥ ३७ ॥

पूर्णामतीत्य तटिनीं शुभकर्मदर्शं
सच्चिद्गुरुर्भृशमशंसदवाप्तकामः ।
गत्वा मठं महवरोचितवस्तुवेदं
प्राश्लाघत प्रियतमोक्तिपरम्पराभिः ॥ ३८ ॥

कृत्वा गुरोरपाचितिं प्रथमस्य देवः
सायं विलोक्य विविधां रचनां तुतोष ।
सर्वेऽधिकारिमनुजाः शुचयस्तदासन्
सूक्ष्मावलोकनधियः सुविचारशीलाः ॥ ३९ ॥

आस्थानपण्डितमहामतिरामनुन्ना
ऋत्विङ्मुखाः क्षितिबुधा वशिनः समीयुः ।
द्वैपायनर्षिसदृशाः श्रुतशीलरीति-
श्रीब्रह्मवर्चसयुता विधिदर्शिचित्ताः ॥ ४० ॥

पात्रोज्ज्वला मृदुतलाजनि यज्ञशाला
यौधिष्ठिरीव परिषन्मयशक्तिजाता ।
संजग्मिरे नवनवान्यपि याज्ञिकानि
क्षिप्तानि नाकनिलयैरिव साधनानि ॥ ४१ ॥

मुख्याधिकारपदमाप सुधीः स कृष्ण-
स्वामी गुरोर्निरुपमं पदमाप यश्च ।
कृत्यं चकार निपुणं स च धर्मशीलो
धर्माधिकारसदृशं नयविद्यशस्वी ॥ ४२ ॥

सज्जीवभूकुरपरेऽपि च कृत्यजाते
स्वे स्वे मुदा गुरुकृपाक्षरमृष्टचित्ताः ।
स्थानादितः किमधिकं पदमेषणीयं
यद्दृष्टमप्यभिमतं सहसा ददाति ॥ ४३ ॥

अभ्यागताः स्तुतिगिरो बहुशो वदन्तो
भक्त्या निधाय पुरतो विविधोपहारान् ।
नेया गुरुं भगवतः प्रथमस्य नेतु-
स्तुल्यं प्रणेमुरधिकादरसन्नताङ्गाः ॥ ४४ ॥

माघं भवत्वतितरामिह मासि यस्मा-
च्छ्रीशङ्करस्य भवति प्रथमा प्रतिष्ठा ।
मासो निवृत्तकलुषो गुरुणैवमुक्तो
माघोऽभवत्सुविदितश्च तथैव नाम्ना ॥ ४५ ॥

माघोऽपि मा गुरुमहोत्सवमासमेतः
स्वाद्यै रसालपनसादिफलैः प्रपूर्णः ।
आसीद्वसन्तसुषमाधिककान्तिरम्यः
कालातिलङ्घनमपि प्रथते कदाचित् ॥ ४६ ॥

शृङ्गाद्रिमूर्तिसदृशे मधुरासमीप-
स्थानस्थकारुरचिते मुनिचिन्तनीये ।
देव्या गुरोरभवतामपि पाश्वलोह्ये
मूर्ती दृषद्भिरचिता अपि मातृकाश्च ॥ ४७ ॥

देवी सिताब्जसमवेश्मविमानभूषा-
सन्तप्तहाटकमयः कलशो बभूव ।
दिव्यातिशायिविभवं चतुरश्रमासीत्
सर्वं यतिक्षितिपतेर्मनसेव सृष्टम् ॥ ४८ ॥

कल्ये सिते गुरुति पञ्चमवासरेऽसौ
कल्पोदितप्रकृतिसुन्दरवस्तुपूर्णाम् ।
शालां विलोकितुमनाः श्रुतिदीर्घनेत्रः
शान्तोऽविशच्छ्रुतिशिरोवचनावलीभिः ॥ ४९ ॥

जायेत यन्निगदितं निगमेन हीनं
यच्चाधिकं विफलमेव हि तत्समस्तम् ।
तत्कर्म साधु करणीयमतीन्द्रियार्थे
श्रद्धालुना विधिपरेण च कार्मणेन ॥ ५० ॥

आर्त्विज्यकर्माणि गुरोर्जगतो भवन्तः
कुम्भाभिषेकसमयेऽवहिता भवन्तु ।
जाग्रत्यनन्यमतयो जिततन्द्रिका ये
कारुण्यपात्रमपि तेऽस्य गुरोर्भवन्ति ॥ ५१ ॥

एवं वचो निगदितं गुरुणा विदित्वा
भूयः समाहितधियः समधीतवेदाः ।
होत्रीयमुख्यसुधियो भृशमन्वतिष्ठन्
स्वं स्वं यथावदखिलं करणीयमग्र्यम् ॥ ५२ ॥

धान्याधिवासमुखमप्यथ विग्रहाणां
चक्रुर्द्विजाः शुभतमे समये विधेयम् ।
हव्यानि होमकुशला जुहुवुः कृशाना-
वेवं समस्तमभवत्सवने प्रशस्तम् ॥ ५३ ॥

शश्राम कश्चिदपि न क्षुधया तृषा वा
दाहेन चाधिजनितेन चिरोदितेन ।
आसीत्परं विधुशिरा भगवान्विभेत्ता
ग्रन्थेर्दुरन्तजनिसंसृतिदुःखहेतोः ॥ ५४ ॥

पूर्वोदिते शुभदिनेऽखिललोकपाल-
तुल्यः प्रसन्नवदनो गजराजगामी ।
रुद्राक्षभासुरगलो मिलितः प्रशस्तैः
देवालयं यतिरवाप सुसिद्धवन्द्यः ॥ ५५ ॥

आनन्दवर्षिमुरलीनिनदोर्मिमाली
सङ्गीतमन्थरमृदङ्गनिनादधीरः ।
वीणामृदुस्वरझरो महभव्यनादः
सर्वांस्ततान गुरुभक्तितरङ्गिताङ्गान् ॥ ५६ ॥

आवाहयन्लघु बुधाः शुभदिव्यमूर्त्योः
षष्टिं कलाश्च मनुतत्त्वविदश्चतस्रः ।
आस्थापयन् श्रुतिवचःस्थितया च रीत्या
प्राणांस्तथा प्रणवसारपराः प्रकामम् ॥ ५७ ॥

सौवर्णकुम्भपरिपूतसुगन्धिदिव्य-
स्वच्छामृतोदकझरेण ततोऽभ्यषिञ्चत् ।
वाण्या गुरोरपि तथोदितदेवतानां
मूर्तीरमेयमहिमा विधितो गुरुः सः ॥ ५८ ॥

गन्धर्वजातममृतायितदिव्यगीतं
व्योम्न्याजगावपि सुपर्वगणो ववर्ष ।
रत्नेन जुष्टमतिहर्षसमृद्धचित्तो
भृङ्गानुयातममितं शुचि पारिजातम् ॥ ५९ ॥

लक्ष्मं विनेयमनुजा जगृहुः प्रसादं
तीर्थं च लोकगुरुमङ्गलहस्तदत्तम् ।
रम्येयमुत्सवकृतिर्मनसश्च वाचां
दूरे बभौ निरुपमा गुरुहस्तजाता ॥ ६० ॥

किं कामधेनुरपरोऽमरभूरुहः किं
ब्राह्मं महः किमु समस्तमहोऽतिशायि ।
संसारसिन्धुतरणिस्तरणिः किमात्मा
सिद्धो गुरुः शुभमहे शुशुभे महात्मा ॥ ६१ ॥

चूडामणिं द्युमणिभासुररत्नजुष्टं
सत्कर्णिकाममृतदीधितितुल्यहीराम् ।
ग्रैवेयकं तरलभासुरमृक्षमुक्तं
नासामणिं सितमरीचिकरप्रचारम् ॥ ६२ ॥

सौवर्णमङ्गदमनेकविचित्ररत्नं
माणिक्यपूगपरिभासुरमङ्गुलीयम् ।
काञ्चीकलापमभियोजितकिङ्किणीकं
प्रत्युप्तरत्नगणशोभि च पारिहार्यम् ॥ ६३ ॥

पत्रोर्णमग्र्यतमहाटकतन्तुकीर्णं
हंसाङ्करञ्जितदशं शुभमन्यदेवम् ।
आचार्यपादमभिवन्द्य मुदोपहृत्य
प्रापोत्तमां सफलतां जनुषो जनौघः ॥ ६४ ॥

सेवां विधाय सुकृतस्य तदोत्सवस्य
श्रुत्वा गुरोः शुभफलामुपदेशवाणीम् ।
संभाविताः सुरभिचन्दनचर्चिकाभि-
र्भक्ताः सुधाधिकरुचीप्सितमन्नमाशुः ॥ ६५ ॥

आकर्ण्य शङ्करगुरूत्सवभक्ष्यजातं
गन्धर्वगीतमतिहारितदुत्थगन्धम् ।
आघ्राय निर्भरमनेकरसं सुधाशा
गर्धायुता मनुजभावमपीषुरग्र्याः ॥ ६६ ॥

सायं सभा समजनीन्द्रसभप्रभावा
स्मेरा बहुत्रिदशदेशिकपण्डितौघा ।
व्याख्यानपञ्चवदनासनसन्निषण्ण-
ब्रह्मोपमानगुरुराजविराजमाना ॥ ६७ ॥

गीतागुरुर्वसति पार्थसखोऽत्र देवो
मृत्युञ्जयः शिवगुरुप्रियदानशीलः ।
देवी गिराममृतकुम्भविराजिहस्ता
श्रीशङ्करोऽपि शुभकर्मपथोपदेष्टा ॥ ६८ ॥

पूर्णातरङ्गनिकुरुम्बितपुण्यतोया
व्योमापगेव तटिनी सततप्रवाहा ।
स्नात्वा ततोऽत्र जपवन्दनतत्पराणां
भक्त्या नृणां भवधियां न पुनर्भवः स्यात् ॥ ६९ ॥

जन्मोत्सवो भगवतः प्रतिवर्षमत्र
स्याच्छङ्करस्य विदुषां सभया वरिष्ठः ।
तस्मिन्कलाः सकलतन्त्रपयःसरस्व-
त्सारप्रचाररुचिराः कुशलप्रदाः स्युः ॥ ७० ॥

स्वस्त्यावहा नवरसप्रसुवां शुचीनां
कान्ति निरन्तरधृतामधिजग्मुषीणाम् ।
संपूजितावयवबन्धसमुज्ज्वलानां
वृद्धिं गवां विदधती परदेवतास्तु ॥ ७१ ॥

आनन्ददो गुरुरसावभयप्रदायी
श्रीशङ्करस्तमनिशं शरणं प्रयात ।
संसारबन्धविभिदोत्सुकमानसाना-
मेको गुरुर्विजयते शरणं हि पुंसाम् ॥ ७२ ॥

अस्यैव शङ्करगुरोरभयप्रदातुः
त्रय्युक्तधर्मपथदर्शनभास्करस्य ।
सर्वा विभूतिरिह विस्मयमादधाना
संराजते सकलमङ्गलकल्पवल्ली ॥ ७३ ॥

को वेद भूमिरियमद्भुतसन्निवेश-
शोभा कुशेशयजनीश्वरलोकतुल्या ।
स्यादित्यचिन्त्यमहिमस्थितसर्वसिद्धेः
किं दुष्करं भगवतः परमेश्वरस्य ॥ ७४ ॥

आभूगवेषणमसावपि रामचन्द्रो
धीरः पुरातनपचेलिमपुण्यसान्द्रः ।
आकुम्भसेकमधिकादरभक्तितन्त्रो
जाग्रत्समस्तमतनोत्कुशलः स्वतन्त्रः ॥ ७५ ॥

बाल्येऽयमाङ्गलकलाकुशलः पटिष्ठो
राज्यद्वयेऽप्यचरमं पदमध्यवात्सीत् ।
आर्हन्त्यमस्य दधतुर्महितौ नृपौ तौ
गुण्येषु को गुरुमतिं कुरुते न पुंसु ॥ ७६ ॥

श्रीदोपमोऽपि बहुजन्मसहानुयात-
सद्वासनासमुपबृंहितशेमुषीकः ।
वैराग्यभक्तिशमदान्तिगुणाकरोऽयं
श्रीदेशिकेन्द्रकरुणापदमस्ति रामः ॥ ७७ ॥

आकल्पमस्य यशसा सह कर्म पुण्यं
मूर्तं चिरन्तनसुखप्रदमत्र भायात् ।
तेनार्चितः प्रमुदितः शशिशेखरोऽयं
पुष्णातु मोदममितं निरपायमस्य ॥ ७८ ॥

अस्योत्तमस्य सदृशं गुरुभक्तपूर्वं
नामोपमानरहितं गुरुकेसरीति ।
आचार्यभक्तिजननीभुवि पूर्वपुण्य-
सद्वासनाप्रभवमातनुते चिरस्थम् ॥ ७९ ॥

अस्मै सदैव वसतिर्महितात्र देशे
श्रीमातृपार्श्व इव नित्यसुखैकहेतुः ।
संरोचतां भवतु च प्रतिभूर्जनानां
सर्वोत्तमेत्यखिलदेशिकपादसेवा ॥ ८० ॥

पत्रोर्णयुग्ममपि हंसरथाकृपोत्थं
हंसाङ्कितं परमहंसपदानुषक्तः ।
विद्यागुणग्रहणलम्पटमानसोऽयं
रुद्राक्षभस्मलसितः पिदधातु मान्यम् ॥ ८१ ॥

भक्त्या गुरौ महति बालसुपूर्व एष
ब्रह्मण्य इत्यभिमतः सुगृहीतनामा ।
ग्रन्थावलिं प्रथयते लघु मुद्रयित्वा
सर्वां निसर्गमधुवर्षिवचोविलासाम् ॥ ८२ ॥

सा शाङ्करी हितकरी विदुषां नितान्तं
ग्रन्थावलिर्विशदवर्णपदाभिरामा ।
सज्जीकृता सुमतिना गुरुराजसेवा-
सक्तेन सन्ततमनेन मुदा महेऽस्मिन् ॥ ८३ ॥

तामद्भुतामनुदिशो व्रजतु प्रकामं
निःसीमपुण्यसहजा सदृशी समाख्या ।
नाम्ना विभातु गुरुभक्तमणिस्तथासौ
मण्युज्ज्वलामपि वहत्वमलाक्षमालाम् ॥ ८४ ॥

संकेतचिह्नविदिताशयरीतिरम्या
संश्लिष्टवर्णपदसन्धिविराजमाना ।
संख्यावदाशयविशेषविधायिनीयं
संराजते समदृशां सततेक्षणीया ॥ ८५ ॥

विद्यारमङ्कृदयकोविदपञ्चशाख-
स्पर्शाविबोधसुगमोज्ज्वलवर्णरीतिः ।
साध्वंशुकावृततनुः प्रतिभात्युदारा
तत्त्वावबोधनपरेयमनन्यतुल्या ॥ ८६ ॥

एवं महार्थसमुदञ्चितभारतीभिः
संमोदसन्ततिपयोनिधिचन्द्रिकाभिः ।
सच्चिद्गुरुर्विबुधगीतशुभापदानो
नेयानयूयुजदमेयशुभेन देवः ॥ ८७ ॥

कर्णाटवाञ्चिधरणीधरमन्त्रिमुख्यान्
जैत्राशिषा परमुदं स वरान्निनाय ।
तापं जहार सकलस्य जनस्य वाण्या
विद्यासुधारसझरीयुतया प्रकामम् ॥ ८८ ॥

सायंतनः समभवत्पटहोच्चनादः
कोलाहलेन सह मोदसमुद्भवेन ।
नृणां तदा दिनमणिश्च गुरोरनुज्ञां
लब्ध्वा महः स्वकमदान्मणिदीपिकाभ्यः ॥ ८९ ॥

कीर्तिर्महोत्सवभवा महती विशुद्धा
　काष्ठाश्रवःसु सह चन्द्रिकया सभूषा ।
साकं दिशाधिपतिभिः सकला मनुष्या
　मोदेन तस्थुरधिकं गुरुवाक्प्रहृष्टाः ॥ ९० ॥

यातेषु केषुचिदहःसु वलारिकल्पे
　गोश्रीपतिर्नरपतिर्विबुधानुयातः ।
पाण्डित्यशाङ्कवफलाद्युपहारहारी
　वेधःसमं प्रणिपपात जगद्गुरुं तम् ॥ ९१ ॥

आन्वीक्षिकीमुख्यकलासु ततोऽस्य योगी
　नैसर्गिकं कुशलभावमुदात्तभावम् ।
गोक्षीरकान्तिपुरुषोत्तमपूर्णभावं
　ज्ञात्वास्य वेदशिरसः पदमादिदेश ॥ ९२ ॥

बुद्ध्या कुशाग्रसमया कृतितुल्यवृत्त्या
　सूक्ष्मार्थभासिमहितोत्तमविद्यया च ।
वंशोचितक्रमसमागतया च धृत्या
　संमानितस्त्रिविधया सहितश्च शक्त्या ॥ ९३ ॥

आशापटायितयशःपटलीसमेतः
　सर्वेष्टदानपरिपूरितविद्वदाशः ।
अन्येद्युरागमदुदग्रतरप्रभावः
　कर्णाटकक्षितिपतिर्गुरुभक्तिपूतः ॥ ९४ ॥

स्थानानि तत्र विविधानि निरीक्षमाणः
प्रत्युद्गतोऽप्यभिमतैर्विविधोपचारैः ।
कृष्णोदयो नरपतिर्गुरुनिष्ठचेताः
तं प्राप देशिकमनुष्ठितनित्यकृत्यम् ॥ ९५ ॥

योगीशसाधुकृतसर्वशुभानुयोग-
स्तत्तत्क्रमेण भृशमुत्तरयन्नृपालः ।
श्लक्ष्णं शुभं तदुपमं परिबर्हजातं
दात्रे गिरामुपजहार गिरां च देव्यै ॥ ९६ ॥

तं सद्गुरुः परशिवात्मजतुल्यकान्तिं
दृष्ट्या गिरा मधुरया च मनःप्रवृत्त्या ।
पुष्यन्निसर्गशुभकर्मपरं तदर्हं
सद्धर्ममूलमिति नाम ददौ च तस्मै ॥ ९७ ॥

पूर्णानदीसमगुणो महितः प्रदेशो
देशक्षमो विधिमुखोदितशुद्धवंशः ।
वंशक्षमः शिवगुरुः शिवपादसेवा
चार्या सती शिवगुरोः सदृशी द्वितीया ॥ ९८ ॥

ताभ्यां समः सुतमणिर्यतिशङ्करार्यः
शिष्यः समोऽस्य भगवांश्च सुरेश्वरार्यः ।
नित्योदयास्य सदृशी शुभतुङ्गभद्रा
कूलोज्ज्वला कमलजातकलत्रपीठी ॥ ९९ ॥

पीठीसदृक्षमहिमा यतिराण्नृसिंहः
सच्चिद्गुरुः सकलवेदशिरोऽर्थवेदी ।
तत्संमिता सुरसुगीतविभूतिरेषा
तस्याः समा भगवतोऽत्र गुरोः प्रतिष्ठा ॥ १०० ॥

इत्यादिकं दिनमणिर्बुधपङ्कजानां
शास्त्रोक्तदानविधृतोदकपूतपाणिः ।
अत्यद्भुतं व्यवहरन् परिशुद्धवाणि-
स्तस्येशितुर्नृपमणिश्चरणौ ववन्दे ॥ १०१ ॥

प्रस्तीमसारवचसां विदुषामुपघ्नं
तं धर्ममूलमवनीपमलङ्करिष्णुम् ।
विश्वंभरां समनुगृह्य गुरुः प्रसादैः
साध्वाशिषं मुनिवरः पुनराबभाषे ॥ १०२ ॥

राजानो भूभरणनिपुणा रञ्जयन्तु प्रजाः स्वा
वेदाः शिक्षागदितनियमा धर्मचर्यां वदन्तु ।
षट्कर्माणो नियतकरणाः सन्तु तद्बोधनिष्ठा
देवास्त्रेताहुतमपि हविर्नित्यतृप्ता भजन्तु ॥ १०३ ॥

पूर्णास्नानप्रयतमनसो मानवा मोदमाना
निष्प्रत्यूहा गणपतिसमाराधनाप्राप्तकामाः ।
शुद्धज्ञाना गुरुपदसरोजातमाध्वीकतृप्ता
वाचां देव्याश्चरणकमले सिद्धिदेऽत्रानमन्तु ॥ १०४ ॥

भुवनगुरुमहान्ते संप्रणम्रान्विधेयान्
प्रथमगुरुरिवार्यं पाययन् धर्मसारम् ।
मधुमयमृदुसूक्तैः सान्त्वयंश्चोत्कचित्तान्
स्वनगरमनुमेने गन्तुमव्याजभक्तान् ॥ १०५ ॥

प्रस्थानप्रणतिपराः पुरस्क्रियाभि-
र्गुर्वीभिर्विनयसमृद्धिशोभिनीभिः ।
ते रेखाजलजझषादिसत्त्वचिह्नं
पादाब्जद्वयमपचिक्युरस्य वन्द्यम् ॥ १०६ ॥

तत्राश्वत्थे सुररिपुहरं गन्धनेतुः कुमारं
फुल्लाशोके दशशतभुजं कार्तवीर्यं च वृक्षे ।
आवाह्योक्त्वा नियमसरणिं रामचन्द्रं विशिष्टां
सर्वज्ञोऽसौ गुरुसुरपतिः शृङ्गशैलं प्रतस्थे ॥१०७॥

इति श्रीनृसिंहभारतीविजये द्वितीये भागे
कुम्भाभिषेककथनं नाम
प्रथमः सर्गः ॥

---

# द्वितीयः सर्गः ।

अथापरान्तान्विषयान्विचित्रा-
न्पवित्रयन्विष्टपदेशिकः सः ।
उद्यानपूर्तालयगोविहारं
पुरं ययौ श्रीशिवनामधेयम् ॥ १ ॥

महेश्वरे मीनानिकेतनारौ
वसत्यपि स्मेरदृशा मृगाक्ष्यः ।
आवासयन्त्यप्सरसोऽवतीर्णा
नाकात्स्मरं यद्धि सुगन्धिकेश्यः ॥ २ ॥

प्रत्यङ्मुखं राजकलावतंस-
राजत्कराब्जं गुरुपश्चवक्त्रम् ।
काषायसंवीतमवेक्ष्य सा पू
रसस्य पात्रं नवमस्य जज्ञे ॥ ३ ॥

तं तस्थिवांसं हृदि रामचन्द्रो
रामायमाणं सहजानुगोऽत्र ।
पुष्पाचलं स्वं गुरुमानिनाय
ज्ञाने समागच्छति को ह्युदास्ते ॥ ४ ॥

आदेर्महोदाहरणं गुरोः स
प्राज्ञोदितं सर्वकलाविशाले ।
शृण्वन्विचित्रं श्रुतिवाक्पवित्रं
रामालयं सद्गुरुरध्युवास ॥ ५ ॥

स रामचन्द्रार्पितसत्क्रियाभि-
र्मोमुद्यमानो रमणीयभावम् ।
ग्रामस्य पूर्तादिविशाललक्ष्मी-
विराजमानस्य निरीक्ष्य रेमे ॥ ६ ॥

तत्राञ्जनासूनुमनूनसिद्धिं
वीरं सुमित्रातनयं जितारिम् ।
क्षमासुतालोकनमण्डिताङ्गं
रामं च पुष्पैर्गुरुरर्चति स्म ॥ ७ ॥

भो रामचन्द्रास्ति तव प्रशस्ति-
र्निःसीमभाग्योपचयप्रसूता ।
क्व भूरि वित्तं क्व च साधुवृत्ति-
रेतद्द्वयं कुत्रचिदेव सुस्थम् ॥ ८ ॥

दूरेऽयमास्ते कलुषस्य देशः
श्वःश्रेयसस्य प्रसवो विशालः ।
यत्रायमास्ते जगदेकवीरः
सीतापतिः सत्पथदर्पणोऽयम् ॥ ९ ॥

विनात्ययं भातु तवात्मविद्या
वस्वोकसाराधिकवस्ववाप्तिः ।
विख्यातिरायातु च विस्तृतिं ते
वदान्यता राजतु वाग्मिता च ॥ १० ॥

रसात्मजारागसमृद्धसिद्धौ
रामे रती रातु रमासमृद्धिम् ।
राजन्यमालायितरम्यवाणीं
राध्यन्त्यभीष्टानि हि रामभक्त्या ॥ ११ ॥

उन्मीलयत्यान्तरमम्बुजं य-
न्नक्तन्दिवोत्थानभिदा च यत्र ।
प्रह्लादनं ज्योतिरुदेतु तत्ते
तापत्रयापोहनमाश्रितानाम् ॥ १२ ॥

अत्रैव तिष्ठासति चन्द्रमौलिः
कैलासशैलाधिकसौकुमार्ये ।
शिलोच्चये पुष्पमये प्रशस्ते
तपस्वियोग्येऽमरसिद्धगेये ॥ १३ ॥

एवं वदंस्तस्य सपुत्रमित्र-
कलत्रपोष्यप्रमुखस्य चित्रम् ।
आशीर्वचः साक्षतनालिकेरं
काश्मीरमाधाच्च कराम्बुजे सः ॥ १४ ॥

अन्वीयमानोऽथ स राजकीयै-
रुद्गीयमानो बहुधा च पौरैः ।
विगाहमानः फलपूगराज-
त्पूगोच्चयं राजपथं विरेजे ॥ १५ ॥

अद्रेस्तटेनैव तुषारमाला-
संभूषितानोकहशीतलेन ।
गच्छन्ययौ नूतनकाननाख्यं
ग्रामं चिकीर्षुः स गुरोर्जयन्तीम् ॥ १६ ॥

तत्रोद्ययौ सुन्दरनामधेयः
पुरस्क्रियाभिर्नवसंविधाभिः ।
यः सुन्दरो भाति परं न नाम्ना
किन्तु प्रसिद्ध्या च धिया च धृत्या ॥ १७ ॥

स ग्रामवास्तव्यजनैः समेतः
तूर्यस्वनैर्मङ्गलवादितैश्च ।
आम्नायवादैर्विविधोपहारान्
समर्पयामास गुरोः पदाब्जे ॥ १८ ॥

कृपा गुरो वाङ्मनसातिगा ते
यदत्र लोकत्रयदेशिकस्य ।
जन्मर्क्षकल्याणमहोत्सवं त्वं
विधातुकामः समुपैषि वन्द्यः ॥ १९ ॥

कैवल्यदानाय विविक्तहृद्भ्य-
स्त्रिवर्गदानाय फलोत्सुकेभ्यः ।
निर्दिश्यतेऽध्वा भवता तदर्हो
नृणां महाभाग्यमभूतपूर्वम् ॥ २० ॥

अहो जनानाममितं वदातं
कर्मास्ति पूर्वोपचितं फलाय ।
नोचेद्गुरुः क्व त्रिदशेश्वराभो
जना वराकाः क्व च कामसक्ताः ॥ २१ ॥

अवर्णनिर्वाणमगादयं ते
भानुप्रभावस्य पदप्रचारैः ।
देशोऽपरान्तः परमात्मतत्त्व-
ज्योतिष्युदात्ते सति किं ह्यपूतम् ॥ २२ ॥

अहो प्रतिष्ठा जगतो हिताय
व्यधायि रम्या भवता गुरोर्हि ।
समेक्षणोऽभूद्विषमेक्षणो यः
त्राणाय धर्मस्य पुरातनस्य ॥ २३ ॥

मान्ये गुरावक्षिगते समाक्षे
त्यजन्ति सर्वेऽक्षिगतस्वभावम् ।
वाग्ज्योतिषि श्रीमुषि ते सुधाया-
स्तापं विहायाप्यमृतं लभन्ते ॥ २४ ॥

गां स्वादुसंसेव्यरसां जनेभ्यो
नूलः श्वफल्गोऽनुदिनं ददासि ।
अक्रूरतां कोशनिविष्टरत्न-
ख्यातिं च कृत्वा मधुभित्प्रियोऽसि ॥ २५ ॥

कृपारसस्यन्दिविशुद्धदृष्ट्या
सदेतिबाधादिसमस्तदोषान् ।
दूरे वितन्वन्विविधांश्चरिष्णु-
र्देशान्स्वतो राजसि सिद्धराजः ॥ २६ ॥

ब्राह्मया श्रियाऽऽनन्दसमृद्धया स्वः
संशोधितायां पुरि कान्तिपीठ्याम् ।
सत्यादिषड्द्वारविराजितायां
स्थितं परिव्राडधिपं प्रपन्नाः ॥ २७ ॥

इत्यादिसत्यार्जवशालिनीभि-
र्भूतार्थवाग्भिः परिगीयमानः ।
तेने स सीमातिगकान्तिजुष्टं
गुरोर्महार्घं महमद्भुतस्य ॥ २८ ॥

तस्मिन्महे सुन्दरशिष्यभास्व-
द्भक्तेश्च वैशाखविशिष्टलक्ष्म्याः ।
पूजादि सर्वं सदृशं समासी-
त्पारीणता चात्र कलासु मूर्ता ॥ २९ ॥

१. सत्यार्जवह्रीदमशमविद्याः.

यथाक्रमं याति समाप्तिमस्मि-
न्महेऽखिलानामपि सौख्यहेतौ ।
दिशन्प्रसादं पुरुषार्थभूतं
ख्यातां स सूक्तिं कथयांबभूव ॥ ३० ॥

स्थानं च राज्ये प्रथमं करस्थं
ख्यात्या बहूक्त्या च नृपस्य लक्ष्म्या ।
अन्यच्च पुत्रादिकमेषणीयं
प्रेयस्तवाशास्यमिहास्ति किं वा ॥ ३१ ॥

अथापि भूयो भवतोऽस्तु शंभौ
भक्तिर्विदुर्या जननीं निधीनाम् ।
यत्र स्थितः पश्यति तत्त्वरत्नं
यद्भूषितो भाति पदेऽर्चनीये ॥ ३२ ॥

कोऽहं कुतो वाजनिषि क्रमः को
गुरोः सकाशाच्च कथं नु जन्म ।
किं तेन सिध्येदिति सूक्ष्मबुद्धे-
र्विचारणैषा महते फलाय ॥ ३३ ॥

षाट्कौशिकं वर्ष्म पितृप्रसूतं
सर्वाशुचीनां सदनं तथापि ।
धर्मादिहेतुं प्रविचिन्त्य सन्त-
स्तावर्चनीयौ पितरौ वदन्ति ॥ ३४ ॥

गुरुः कृपावान् श्रुतिपारदृश्वा
विद्यात एनं जनयत्यमायः ।
ब्राह्मीं तनुं चाधिवसन्प्रशस्तः
शास्त्रप्रणेतापि भवत्यसौ सः ॥ ३५ ॥

स ब्रह्मचर्येण महाबलेन
शरीरयानः शुचिबुद्धिसूतः ।
स्वायत्तवृत्त्यंशुभिरक्षवाहा-
न्वश्यान्विधायात्मपदं प्रयाति ॥ ३६ ॥

तन्नित्यलक्ष्मीपरिशोभमानं
शुक्रं स्वयंज्योतिरनन्यवेद्यम् ।
सकृद्विभातं तमसः परस्तात्
विभाति यस्मिन्यतयो रमन्ते ॥ ३७ ॥

न नैपुणी सर्पति तर्कमात्र-
बुद्धेः पदस्यावगमेऽत्र किंतु ।
आचार्यदेवस्य कृपैव हेतु-
र्या सम्यगाप्ता भवतात्र पुण्या ॥ ३८ ॥

अस्ति प्रवृत्तिः किल वैदिकी वा
सर्वत्र पुंसामथ लौकिकी वा ।
स्वात्मार्थमेवेति विनिश्चितोऽर्थः
स एव सम्यक्परिचिन्तनीयः ॥ ३९ ॥

नाध्यक्षमस्मिन्क्रमते प्रमाणं
संशेरते तत्र हि तन्त्रकाराः ।
नाध्यक्षगम्ये विषये विवादः
कुत्रापि केनापि निरूपणीयः ॥ ४० ॥

साहायकं तत्र गुरोर्दयालो-
र्गवेषणीयं नियमेन पुंसाम् ।
मोहान्धकारे चरतां जनानां
ज्योतिस्तदावेदयते स्थिरं हि ॥ ४१ ॥

अतीन्द्रियार्थे श्रुतयः प्रमाणं
तत्संप्रसूताः स्मृतयः प्रमाणम् ।
व्याचख्युरेता विबुधा नयौघै-
र्धर्माः पुराणास्तदशङ्कनीयाः ॥ ४२ ॥

त्वं चेत्स्थिरः स्याः पथि वैदिकेऽस्मिन्
सर्वा भवेन्मद्रपुरी तथैव ।
यद्वृत्त आस्ते जगति प्रधान-
स्तद्वृत्तमन्येऽनुसरन्ति नूनम् ॥ ४३ ॥

द्रष्टुं क्षमा नाद्यतनी सभेयं
धर्मान्वृथा रागपरागपूर्णा ।
भूतं भविष्यच्च हि शास्त्रवेद्यं
घूकः किमीक्षेत सहस्रभानुम् ॥ ४४ ॥

आस्तां विवाहादि पुरेव कृत्यं
क्षुण्णे हिताया ध्वनि संप्रचारः ।
संवर्धतां धर्मतरुः फलाढ्यो
वेदादिशालात्र समेधतां च ॥ ४५ ॥

षड्दर्शनीसारसुधाभिवर्षी
प्रज्ञासमालोडितशास्त्रसिन्धुः ।
ववर्ष धर्मान्सुगमान् सभायां
गुरुः स एवार्हति तान्प्रवक्तुम् ॥ ४६ ॥

ततो यथावद्विहितोत्सवोऽयं
विश्राणिताभीप्सितसर्वकामः ।
ययौ वनं तेन च सज्जनौघै-
र्दूरानुयातः पथि शारदाख्यम् ॥ ४७ ॥

यत्रापगा पश्चिमदिक्प्रवाहा
शिळाकुला गच्छति भारताख्या ।
खद्योतलोलालिसुमालिराज-
द्विचित्रचेळायितशाद्वलाभा ॥ ४८ ॥

लसज्झरौ यत्र विहारितारौ
नानासुमाराधितपुष्पवन्तौ ।
ऐरावतस्पर्धिकरीन्द्रघोषौ
विराजतो दर्दुरचन्दनाद्री ॥ ४९ ॥

यत्रावनीनिर्जरवारवास-
रम्या विशाला बहवोऽग्रहाराः ।
निरन्तराः पुण्यजनाधिवास-
देशाञ्छ्रिया सन्ततमाह्वयन्ते ॥ ५० ॥

नित्यं सहस्रैर्वणिजः पणन्ते
यत्रोद्यमैर्भूरिधनाभिलाषाः ।
पणायति श्रीदजनः समृद्धिं
यत्रानुगेहं भृशविस्मयेन ॥ ५१ ॥

गन्धर्ववंश्यो विनतोऽत्र भूपः
सौधे नवे सद्गुरुमुक्तिचारुम् ।
मन्त्रोपदेशं प्रणिपत्य लेभे
पर्जन्यवद्वर्षति सद्गुरुर्हि ॥ ५२ ॥

कृष्णोऽथ नाम्ना यशसा वलक्षः
सौधं गुरुं मेरुमिवातिचारुम् ।
नीत्वाऽथ शास्त्रागमपाठशालां
व्यधत्त पूजां प्रथमां गुरोः सः ॥ ५३ ॥

जग्राह विद्यां स च धर्मशील-
नाम्ना सहाचार्यकृपाकटाक्षात् ।
स ह्यर्हति प्राग्रसरो नृणां तां
भातीह धर्मः खलु विद्ययैव ॥ ५४ ॥

आदिश्य शिष्यांश्च महोपदेशं
मूल्येतरं मूलमशेषसिद्धेः ।
धर्म्ये प्रणम्रान्स्वपथं द्विजादी-
न्स कार्यकारप्रमुखान् शशास ॥ ५५ ॥

स वन्द्यमानो दिशि तत्र सर्वैः
प्राचीमुखो मङ्गलदेवताभिः ।
संस्तूयमानो मुरलीनिनादै-
र्ध्यायन्महानन्दनटं ययौ सः ॥ ५६ ॥

महत्स्थलं तच्च चिदम्बराभं
यत्रानिशं नृत्यति गीयमानः ।
गणैरशेषैः करदत्ततालै-
रानन्दसिन्धुर्नटराजराजः ॥ ५७ ॥

तदन्तिकाद्रिस्थतटाधिवास-
पुरे वसन्गन्धवहातिशीते ।
विनेयसंप्रार्थनया स योगी
सभां सुधर्मानवमां ससर्ज ॥ ५८ ॥

रीतिः पुराणी चिरदर्शिचीर्णा
साध्वीव नित्याभ्युदयाय साध्वी ।
नवीनरीतिः पुरुषं नवीना
वारेव योषा नयतेऽपमार्गम् ॥ ५९ ॥

तां न त्यजेयुः प्रथमां भवन्तो
जायामिवाशेषपुमर्थहेतुम् ।
यथातथं सोऽस्तु गुरूपदेश-
स्तदर्थमेषोऽवततार शम्भुः ॥ ६० ॥

आस्तेऽनवद्या निगमान्तविद्या
यां राजविद्येति जगाद कृष्णः ।
तस्याः श्रियो वोऽधिगमाय नित्यं
ब्रह्मोद्यमास्तां भवतामचोद्यम् ॥ ६१ ॥

उच्चोऽत्र नीलाचल एष मेघै-
र्नीलो हिमानीततिनित्यशीतः ।
मनःशिलारूषितचित्रकूटो
नमेरुमुख्यांघ्रिपपुष्पगूढः ॥ ६२ ॥

सप्तच्छदामोदसमोदनाग-
स्तापापनोदक्षमकुञ्जपुञ्जः ।
शय्यासनाद्यार्थितकर्बुराश्मा
खन्या भवान्याः प्रभवश्च मान्यः ॥ ६३ ॥

महामतीनात्ममतीन्यतीन्द्रा-
नावासयिष्यद्यदि शैल एषः ।
न चाधरिष्यद्धननीलिमानं
हिमाचलाभां त्वधिकामवक्ष्यत् ॥ ६४ ॥

एवं विचिन्त्य प्रमथाधिनाथो
मुदोपकण्ठेऽस्य शिलोच्चयस्य ।
कैलासशैलादृषभाद्रिमीश-
स्तपोऽधिवासं चकमे निवासम् ॥ ६५ ॥

एवं विचिन्त्यास्य शिलोच्चयस्य
प्रियेऽन्तिकेऽस्मिन्नटराजराजः ।
नटत्यशेषानुजिघृक्षयास्मिन्
कैलासमूर्ध्नीव मुनीन्द्रवन्द्यः ॥ ६६ ॥

कैलासनामा धवलो हि शैलः
स्वर्गापगानिर्झरहारहृद्यः ।
यमावसन् शास्ति सुरासुरादीन्
सृष्ट्यादिहेतुर्जगतां कपर्दी ॥ ६७ ॥

विद्यामयो हैमवतीसहायः
शुद्धेन्दुकान्ताधिककान्तिकान्तः ।
अध्यासिताम्नायमहोक्षवाहो
नन्द्यादिभक्तस्तुतदिव्यगेयः ॥ ६८ ॥

आनन्दपाथोनिधिरप्रमेयः
त्रिलोचनो नीलगलः प्रशान्तः ।
उपासते तं प्रमथा नटन्तं
ज्योतिर्मयं चन्द्रकलाकलापम् ॥ ६९ ॥

गराशमद्रीशमनीशमीशं
स्वयंप्रकाशं प्रणमद्गिरीशम् ।
चेलायिताशं गलिताखिलाशं
तमारुरुक्षेदचलं स योगी ॥ ७० ॥

योऽग्नित्रयाराधनधूतपापो
वैराग्यसंतोषनिवृत्ततापः ।
समस्तजन्तुप्रसृतानुकम्पो
भक्तिप्रसन्नप्रमथाधिपश्च ॥ ७१ ॥

योगक्रमापावृतदिव्यवर्त्मा
ज्ञानाग्निनिर्दग्धसमस्तपाप्मा ।
जाम्बूनदात्माभसमाहितात्मा
गुरुप्रसादोदितमन्त्रभूमा ॥ ७२ ॥

आरुह्य तं शैलमनन्तशृङ्गं
संकल्पमात्रोदितसर्वकामः ।
साक्षात्कृतोमेशपदारविन्दो
नित्याप्तसिद्ध्यष्टकशोभमानः ॥ ७३ ॥

शिवार्धदेहस्य गुरोः कटाक्षै-
र्भक्तः स वेदान्तविचारनिष्ठः ।
समेत्य साकं सनकादिसिद्धै-
र्नित्याप्तसंतोषतनुः सदा स्यात् ॥ ७४ ॥

तच्छङ्करो लोकगुरुः सदास्तां
सन्मार्गसंदर्शनसत्ययोर्वः ।
अवाप्तकामः पशुपाशभेदी
भक्तानुकम्पी भगवान्महात्मा ॥ ७५ ॥

एवं जरामृत्युगदागदाभं
स्वाद्यं मनःपेयमपायहीनम् ।
उक्त्वा सुहृद्वाङ्मुखमाश्रितानां
प्रणाय्य शिष्याभिमतं गुरुः सः ॥ ७६ ॥

प्रियंवदः सर्वबुधोपलभ्यः
स सातयं सर्वजनाभिवन्द्यम् ।
भव्यप्रसादं भवमुक्तिहेतुं
भवस्य सच्छिष्यकरे व्यतारीत् ॥ ७७ ॥

शिष्याश्च नारायणशास्त्रिमुख्या
गुरोर्वितेनुर्विधिवत्सपर्याम् ।
अवापुरानन्दघनोच्चशैलं
वीक्षांबभूवुः प्रथमां श्रियं च ॥ ७८ ॥

दिनानि नीत्वा कतिचित्पुरेऽस्मिन्
ययौ पुरीं नामशिलाभिधानाम् ।
तत्राद्रिकूटास्थितमादिदेवं
स्वभ्यर्च्य पाराशरिराडुवाच ॥ ७९ ॥

---

१. सातयं सुखजनकम् । 'अनुपसर्गाल्लिम्प—' इत्यादिना सातेः रूपम् ।

भक्तानवेक्षस्व च भक्तिमात्रं
प्रह्लादमावीर्हि नृसिंह भक्त्या ।
भक्तेः किमीक्षास्ति सुलिङ्गवर्ण-
वयःकुलाचारपुराकृतेषु ॥ ८० ॥

नमः परस्मै पुरुषाय भूम्ने
त्रयीमयाय त्रिगुणातिगाय ।
मायाविभेत्रे महसां गृहाय
प्रज्ञानरूपाय निरामयाय ॥ ८१ ॥

एवं स्तुवंस्तत्र नृसिंहदेवं
नृसिंहमन्त्रार्थविचारशीलः ।
सदा स्मरन् स्वं गुरुमप्रमेयं
पुष्पैः समार्चीत्पुरुषार्थभूतम् ॥ ८२ ॥

तस्येशितुः पुष्पवने प्रचारं
नित्यात्मविद्योदयवाग्विचारम् ।
स्मरन्नपि व्यासमुनीन्द्रपूजा-
कालस्य सामीप्यमचिन्तयच्च ॥ ८३ ॥

प्रह्वस्तदा ताण्डवरायभक्तो
ग्रामे स्वकीये शुकतातपूजाम् ।
अभ्यर्थयामास गुरुं विधातुं
तृप्येत्पुमान् श्रेयसि कः करस्थे ॥ ८४ ॥

अङ्गीचकाराधितटं विधातुं
तां सह्यजायाः स च तस्य भक्त्या ।
अयूयुजत्तं परमं प्रहर्षं
प्रश्नं महार्थं च ततोऽन्वयुङ्क्त ॥ ८५ ॥

कुमारपूजादि यथायथं किं
निरन्तरायं निखिलाभिनन्द्यम् ।
निर्वर्त्यते तद्गुरवापमाप्तं
तपः क्रियाभिर्हि पुरातनीभिः ॥ ८६ ॥

निर्विघ्नभास्ते भवतः कृपात-
स्तत्सर्वमद्य प्रियदेशिकोक्तम् ।
गुरुप्रभावे सति दीप्यमाने
ककुप्सु जायेत कुतोऽन्तरायः ॥ ८७ ॥

श्रद्धावचोरीतिसमुत्थमोदो
गुरुर्नवस्तस्य पुनः पुनश्च ।
षडाननासक्तमनाः प्रतस्थे
कृतार्थतां चास्य विधातुकामः ॥ ८८ ॥

पथि पथि रचयित्वा तत्र तत्राग्रहारे
मधुरनिनदसारे दत्तपुष्पोपहारे ।
निगमभणितितारे चन्द्रमौलेर्गभीरे-
ष्यपचितिममिताथां सत्यधर्मप्रचारे ॥ ८९ ॥

शुचिहिमकरवक्त्रः फुल्लपद्मायताक्षः
शुकगुरुगुरुपूजां प्राप साधारणीयाम्[1] ।
परिरचयितुकामश्चक्रवर्ती यतीनां
निधिमभिनवभासामार्यपाल्याग्रहारम् ॥ ९० ॥

इति श्रीनृसिंहभारतीविजये
द्वितीये भागे द्वितीयः सर्गः ।

---

१. साधारणीयां साधारणसंवत्सरभवाम् ॥

# तृतीयः सर्गः ।

प्रार्थितोऽथ स मुनिर्व्रतादिकं
ताण्डवेन धनदेन भूसुरैः ।
तत्र सौधमवदातमाविशत्
शारदाभ्रमिव चन्द्रमा गुरुः ॥ १ ॥

यत्र सर्वशुभधामलोचनः
क्रौञ्चभेदनपटुः षडाननः ।
दण्डपाणिरमरः शिखावल-
स्मेरबर्हकवचो विराजते ॥ २ ॥

एकतामभिवदन् श्रुतीरितां
भद्रया चिदभिधानमुद्रया ।
शङ्करोऽत्र गुरुरीशजीवयोः
स्वे महिम्नि लसति प्रतिष्ठितः ॥ ३ ॥

यत्र तत्समगुणो गुरुः स्वयं
सच्चिदादिपदभाग्बुधप्रियः ।
शाश्वतीमभिमतार्थसंहतिं
संददद्विजयते विलोकनैः ॥ ४ ॥

तौ प्रणम्य पुरुषोत्तमार्यितां
शाश्वतस्थितिरतो बुधव्रजः ।
अश्नुते निगमसागरोत्थितां
ज्ञप्तिमन्तभयहारिणीं सुधाम् ॥ ५ ॥

सह्यशैलतनया सुवर्णिता
यत्र सद्गुरुवचोवशंवदा ।
स्वप्रमाश्रुतिरिवैत्यखण्डता-
तत्परत्वमतिदुर्गमान्तरा ॥ ६ ॥

सह्यजाकरतरङ्गसंपत-
त्सह्यवंशमणिसंज्वलत्कणान् ।
संवहन् गुरुगुहौ सिषेविषु-
र्यत्र सर्पति सदागतिर्मरुत् ॥ ७ ॥

ध्यानयोगपरमौनिनोः सदा
निर्विकल्पपरमात्मसंस्थितिम् ।
सात्त्विकं कलयितुं समीहते
नैमिषेयवनसंनिभं च यत् ॥ ८ ॥

ब्रह्मविद्वरसदाशिवामर-
क्ष्माधरांघ्रिसरसीरुहाङ्कितम् ।
कामलोभमदमानवर्जितं
यत्प्रकाशयति सत्वसम्पदम् ॥ ९ ॥

यत्र भाति सुकृतं फलात्मकं
साधुभक्तबहुजन्मसंचितम् ।
यत्सदाशिवमुनीन्द्ररोचिषे
रोचते नवनृसिंहयोगिने ॥ १० ॥

तप्तहाटकमरीचिवर्णिका-
रञ्जितेऽत्र भवुकेऽम्बराकृतौ ।
कल्यभानुमिव कल्मषापहं
तं ननाम जनतार्घ्यदायिनी ॥ ११ ॥

सर्ववित्स च गुरुर्व्यकासय-
द्वन्द्मानजनताहृदम्बुजम् ।
तेन साक्षिणमपीक्षते स्म सा
दृष्टिरीक्षितुमपेक्षते रविम् ॥ १२ ॥

अम्बरं मृदुकषायरञ्जितं
सुन्दरं मधुफलं मनोहरम् ।
सद्गुरुः सममतिः समाददे
तत्समर्पितमनुग्रहादरः ॥ १३ ॥

प्रार्थितः परिषदा समुत्कया
प्रह्वया प्रयतचित्तया गुरुः ।
स प्रकाममुपचक्रमे क्रमा-
न्मङ्गलं व्रतमशेषतत्त्ववित् ॥ १४ ॥

माश्वतुष्टयमहे महत्यभू-
यद्यदत्र वदितुं गुरोर्नवम् ।
तत्समुद्यमपरोऽपि विस्तरा-
न्न क्षमः फणिपतिर्वचोनिधिः ॥ १५ ॥

स्नांस्त्रिसंध्यममलापगाजले
पान् स्वधर्मसरणिं यथाविधि ।
लानशेषजननेत्रमानसे
यन्नघानि परिपश्यतां नृणाम् ॥ १६ ॥

वीक्षणेन विशदेन जङ्गमं
स्थावरं च कलयन् सुसंस्तुतम् ।
जाग्रदात्मनि परं तदा स्थलं
ब्रह्मलोकमिव तत्प्रभासयन् ॥ १७ ॥

द्वन्द्वितापगममोदनिर्भरं
स्वान्तशान्तजनमेदुरं तदा ।
कृत्स्नकर्मकृदभासयत्स्थलं
व्यास एव मुनिरागतो नवः ॥ १८ ॥

चन्द्रमौलिमभितः स्थितैः सुरैः
पूजयन्सुमचयैः सुगन्धिभिः ।
धापयन् श्रुतिवचःसुधां बुधा-
न्व्यद्युतत्स गुरुरात्मलोचनः ॥ १९ ॥

आगमञ्जनततिस्तमीक्षितुं
ग्रामतो नगरतोऽथ देशतः ।
देवतापितृतपस्विपूजन-
प्रोच्छ्रिता च समुपागमत्कुहूः ॥ २० ॥

मध्यमेऽह्नि पटुकाहलीमुखं
वादितं परिजनैर्निवेदितम् ।
संविदान उरुमङ्गलोद्यतः
संबभौ जिगमिषुः स चापगाम् ॥ २१ ॥

आपगां चलतरङ्गमालिकां
सह्यजाममृतसंनिभोदकाम् ।
स्नातुमत्र नियमं च सेवितुं
सोऽगमत्परिवृतोऽनुगामिभिः ॥ २२ ॥

साङ्कदण्डधरतालवृन्तक-
च्छत्रचामरकुशादिधारिणः ।
नारिकेलफलपुष्पचन्दन-
स्वर्णभाजनविराजिपाणयः ॥ २३ ॥

गीयमानसुरबृन्दवन्दिता-
चार्यदिव्यचरिता धरासुराः ।
सस्वरक्रमविशुद्धवेदवा-
ग्गानपूतवदनास्तमन्वयुः ॥ २४ ॥

स्वर्णभावहकषायरञ्जित-
स्पृश्यचेलपिहितोत्तमाङ्गकः ।
शुभ्रभस्मशुचिफालपट्टको
मन्दहासभरितो गुरुस्तदा ॥ २५ ॥

हेमसूत्रविधृताक्षमालिका-
कान्तिदाथिभसितोल्लसद्गलः ।
शुद्धहस्तधृतवेणुदण्डकः
पादुकारुचिरपादपङ्कजः ॥ २६ ॥

आकुमारभवनादुपस्थिता-
नातरङ्गिणि जनान्निरन्तरान् ।
वीक्षणेन वचसा शुभं समा-
पृच्छते स्म हृदयेन चासकृत् ॥ २७ ॥

तत्र साधुरचिताखिलाह्निकं
नारदादिवृतविष्णुसंनिभम् ।
मध्यमेऽह्नि पुनराश्रमोन्मुखं
गां गतं रविमिवागमात्मकम् ॥ २८ ॥

तं नवं प्रणवमन्त्रतत्परं
निर्ममं निरुपमं नरोत्तमम् ।
तृप्तिरास्त न च पश्यतां नृणां
वीक्षणानलसपक्ष्मशोभिनाम् ॥ २९ ॥

चन्द्रमौलिसदनं पुनर्गुरुः
प्राप्य मङ्गलसमृद्धिसेवितः ।
शारदाद्यपचितिं यथाक्रमं
प्रातनिष्ट स हितासनास्थितः ॥ ३० ॥

येन भाति रविरिद्ध ओजसा
तं तपन्तमखिलावभासकम् ।
आवसन् शिवमशेषसंश्रयं
सोऽर्चति स्म जगतां गुरुः स्वयम् ॥ ३१ ॥

ऊर्मयोऽपि षडमून्न पस्पृशु-
र्मानुषान् गुरुकटाक्षरञ्जितान् ।
दृष्टिरस्य हि शुभा सुधामयी
ध्यायतः परशिवातनुं सदा ॥ ३२ ॥

एवमेव च गतेषु केषुचि-
द्वासरेषु दुरिताद्रिवज्रभृत् ।
आययौ गणपतेर्महोत्सवः
सेवितुं यतिपतेर्व्रतोत्सवम् ॥ ३३ ॥

मङ्गलं स्पृशति मङ्गलान्तरं
साधुयोगिमहदाश्रितं खलु ।
उन्नते गिरितटे स्थितं जलं
नित्यमेव वहति स्थिरातले ॥ ३४ ॥

यद्यपि प्रियतमा महीतले
सेव्यते गणपतेः समर्हणा ।
ऋष्यशृङ्गगिरिशारदालये
प्रत्यवायधुतये तु साऽधिका ॥ ३५ ॥

शङ्करो दुरितभङ्गतत्परो
जित्वरो हि भगवान्विरोधिनाम् ।
इत्वरं प्रथमतां सुरश्वरं
छात्रमत्र सदृशं न्यवेशयत् ॥ ३६ ॥

तत्क्रमागतनृसिंहभारती-
मण्डिताजनि सभा महोद्या ।
सर्वतन्त्रनिकषो विपश्चितां
विघ्ननायकमुदे सुनिश्चिता ॥ ३७ ॥

हेमरम्यमृदुपद्मविष्टर-
स्थायिशुद्धपरहंसभासुरम् ।
आश्चर्यं विजयते स्म संपदां
तत्कृपारसभृतं सदःसरः ॥ ३८ ॥

उत्सवेऽत्र परहंसभूषितां
रत्नकुम्भकरपङ्कजोज्ज्वलाम् ।
सेवितुं सपदि सङ्गता बुधा
हंसराजय इवाब्जिनीं सभाम् ॥ ३९ ॥

अब्जसंभवसभामिवामराः
सूतसंसदमिवर्षिपुङ्गवाः ।
कोविदा जनकराट्सभां यथा
धर्मपुत्रयजनस्थलीं द्विजाः ॥ ४० ॥

तं प्रणम्य शुभपादपङ्कजे
प्राभृतं विनयरत्नभूषितम् ।
ते फलादिकमुपाहरन् बुधा
नित्यशुद्धफललाभसाधकम् ॥ ४१ ॥

ते तदाननसुधांशुनिर्गल-
द्वाक्सुधापरिहृतान्तरज्वराः ।
स्वस्वनिष्ठममितं गुरोः परं
व्यक्तमूचुरधिकादरं जनाः ॥ ४२ ॥

आगणेशपरिपूजनोत्सवं
श्वःप्रभृत्यनुदिनं शुभा सभा ।
पाण्डिती भवति चापराह्णिकी
तत्र यूयमभियात कोविदाः ॥ ४३ ॥

इत्थमार्यहृदयोऽधिशारदा-
राजधानि सचिवो बुधप्रियः ।
प्रोचिवांस्तदनु संमतिं गुरोः
प्राप्य चावसथमागमन्बुधाः ॥ ४४ ॥

उत्तमेन विधिनाथ सत्कृताः
पण्डिताः समामिलन्यथोदितम् ।
सा सभा गुरुसमीक्षणोत्सुका
पीठिका च निहिता यथाक्रमम् ॥ ४५ ॥

वन्दिनश्च बिरुदावलिं जगुः
श्रोत्रपेयविविधस्तवाञ्चिताम् ।
प्राश्निकाश्च पदमास्थिता बुधाः
संन्यधादधिकृतो वरः सुधीः ॥ ४६ ॥

स्तोत्रसक्तमृदुमञ्जुलाधरो
मन्दमन्दपदराञ्जितस्थिरः ।
अक्षराहितमना गुरुः स्वयं
सोऽध्यतिष्ठदतिमञ्जुलासनम् ॥ ४७ ॥

सङ्गितापि परिषद्गतध्वनिः
संश्रितैकमतितामिवाबभौ ।
सात्त्विकीं श्रियमसूत सद्गुरोः
संनिधिः समधिकां समाहिताम् ॥ ४८ ॥

ऐतिहासिकबुधाः कथां श्रवः-
पेयसारलहरीमचक्षत ।
कीर्तनानि च जगुः कुशीलवाः
शारदास्तवपराणि सस्वराः ॥ ४९ ॥

वल्लकीमतिमृदुस्वराश्रितां
वैणिका मृदुमृदङ्गनादिताम् ।
साधु वैणविकगीतिमिश्रितां
संजगुर्गमकगुम्भगर्भिताम् ॥ ५० ॥

वाजपेयिकमुखा मखीश्वराः
श्रौतकर्मसु समूचिरे क्रमम् ।
शिक्षकाः स्वरबलादिपद्धतिं
सामगाः सरणिमूचुरौक्थिकीम् ॥ ५१ ॥

कालदेशमितितत्त्वशोधन-
प्रक्रमादिगणितस्थिता बुधाः ।
वाक्यदृक्सरणिवादमब्रुवन्
सप्रमाणमतिसूक्ष्मधीपदम् ॥ ५२ ॥

स्फोटवादमपि तेनुरष्टकाः
शब्दतत्त्वपरिशोधकाः परे
औपवर्षमतमूचिरे परे
भाष्यतत्त्वनिहितेक्षणाः स्फुटम् ॥ ५३ ॥

आदिशेषकृतभाष्यफक्किका-
मर्मरीतिमपि तेनिरे परे ।
आवहन्दशशतावधानिका
विस्मयं सपदि निःसृतोत्तराः ॥ ५४ ॥

शाबरोक्तिघृणिभासुराखिल-
न्यायरत्नगणजैमिनीयके ।
पाण्डितीं नवनवामचीकशन्
केचन स्थिरधियः परिस्फुटम् ॥ ५५ ॥

सर्ववादिपरिचोदिताखिल-
प्रश्ननिर्णयपरोत्तमोत्तराम् ।
उत्तरामपि च सूत्रपद्धतिं
व्यासपूज्यरचितां परेऽवदन् ॥ ५६ ॥

लिङ्गमादधुरुपक्रमादिकं
षड्विधं सुविशदं सुविस्तरम् ।
कोविदा निगमशीर्षभारती-
तत्त्वरत्नसमवेक्षणक्षमम् ॥ ५७ ॥

भाष्यकृत्पदपदार्थवर्णन-
प्रक्रमप्रभुनृसिंहभारती ।
भारतीं मधुपयःसुधारुचिं
बिभ्रतीमभिजगाद भामतीम् ॥ ५८ ॥

भामतीव्रततिपंक्तिभाझरी-
भासिकल्पतरुवाक्सुमोदितः ।
संसदं परिमलः सुवासिता-
माततान गुरुवाग्विजृम्भितः ॥ ५९ ॥

स्वर्धुनीजलझरातिशायिनीं
सर्वतन्त्रगुरुयोगिभारतीम् ।
शृण्वती न समवाप निर्वृतिं
सा सभा गलितभेदवादिनीम् ॥ ६० ॥

आबृहस्पतिमतं निरूपय-
न्ना च शेष्यवयवत्वनिर्णयात् ।
तत्तदुक्तसरणिं विभञ्जय-
न्नद्वयामृतरसं ववर्ष सः ॥ ६१ ॥

नारदादिमुनितुल्यवैभवा
गायका मधुगणेशपञ्चकम् ।
आलपन्स्वरझरप्रभासुरम्
आवहन्त उरुचित्रितां सभाम् ॥ ६२ ॥

ह्यर्धदन्तकरपद्ममीश्वरं
सद्गुरुस्तमुपचचार सर्वथा ।
आविरिञ्चि विबुधाः समागताः
सेवितुं वियति तं सुविस्मिताः ॥ ६३ ॥

ऋङ्मुखागमतदङ्गकीर्तनं
काहलीप्रमुखवाद्यवादनम् ।
अप्सरोनटनगाननिर्भरां
द्यां ततान सुरवारभासुराम् ॥ ६४ ॥

रत्नगर्भचरणाकरोदितं
पुष्पराशिमणिसञ्चयं शुभम् ।
सा सभा नवनिधानमिन्दिरा-
मन्दिरं शिरसि सन्नते दधे ॥ ६५ ॥

विघ्ननायककृपारसान्तरं
भक्षणं सुरभि दृश्यमुत्तमम् ।
उत्सवे सकललोकभेषजं
नाकदुर्लभमधायि मानवैः ॥ ६६ ॥

चारणादिमिथुनोच्चवादितं
द्यां ततान सुरवाहनाकुलाम् ।
एक एव हि स सर्वदेहिनां
प्रत्यवायगिरिभेदने पटुः ॥ ६७ ॥

वीक्षणेन पुलकोत्कराञ्चितां
तां विसृज्य समितिं जितश्रमः ।
सान्ध्यकृत्यमखिलं समाप्य च
क्षाणदीमपचितिं चकार च ॥ ६८ ॥

सर्वमेव महमीशितुश्चरं-
स्तत्समाप्तिसमये यथायथम् ।
पारितोषिकमदापयद्गुरु-
र्यन्निधेरधिकमाबभौ तदा ॥ ६९ ॥

पूर्णिमाविधुरवाकिरत्करा-
नस्तवीत्स गणराजमग्रतः ।
विघ्नराडधिपुरं स चाचर-
न्मेदिनी समभवत्पयस्विनी ॥ ७० ॥

प्राभृतं रजतहेमनिर्मितं
श्वेतपर्णदशमाशिषा गुरोः ।
शारदाङ्कमपि कङ्कणादिकं
लेभिरे च विबुधाः सहस्रशः ॥ ७१ ॥

प्रश्रिताय सहजश्रियोज्ज्वलं
भक्तरत्नमिति नाम पूजितम् ।
ताण्डवाय गुरुरत्नसंभवः[1]
कौस्तुभाभमददादतिप्रियम् ॥ ७२ ॥

सोऽत्यशेत वसुनैव नापरान्
किंतु भक्तिविनयश्रियापि च ।
द्विस्त्रिरप्युपचचार तं गुरुं
यक्षराडिव सपर्यया शिवम् ॥ ७३ ॥

कल्पवृक्षमुखवृक्षमालिका-
सन्निषण्णसुरगीतवर्णितम् ।
शक्तिपौत्रमुनिपूजनव्रतं
विस्तृतं तदुपमं चकार सः ॥ ७४ ॥

---

१. रत्नसंभवः समुद्रः ।

सह्यजातटमपूर्वसंपदां
संविधाय भवनं जगद्गुरुः ।
संभ्रमेण सहितैर्जनैर्वृते
संन्यधान्निकटचेलपत्तने ॥ ७५ ॥

आर्यमिश्रवरमाविपालकं
चावनद्विपमासरीसृपम् ।
प्राणिजातमधिवर्त्म पिप्रिये
मस्करीन्द्रमुखचन्द्रदर्शनात् ॥ ७६ ॥

तत्र वेङ्कटबृडो वदावदो
राजकीयवदनाधिकारवान् ।
धार्मिको बहुसखः प्रमाणवित्
संविधामरचद्गुरुप्रियाम् ॥ ७७ ॥

यो गुरोरवजगाय वैदुषीं
प्राक्तनीमभिमतां विचक्षणः ।
ऋष्यशृङ्गगिरिपार्श्वमावस-
न्वेदशीर्षवचनोदितां नतः ॥ ७८ ॥

मित्रतापदमनेकधीमतां
निर्ममे च पुरि यः सभां शुभाम् ।
यत्र वर्णिपरिशिक्षणोचिता
रीतिरध्ययनकर्मणीक्ष्यते ॥ ७९ ॥

य: स्वयं प्रतिदिनेश्ववासरं
सङ्कृतानुपचचार तांस्तथा ।
ये यथा स्वभवनं न लिप्सवः
संभवेयुरमिताघ्र्यसत्कृताः ॥ ८० ॥

तत्र पुण्यजनमान्यभूधना
वाग्मिनः कमलजोरुसंभवाः ।
ब्राह्मणैरनुगुणैः समेधिता-
स्तेनिरे विधिवदर्हणां गुरोः ॥ ८१ ॥

स्वात्मतृप्तगुरुहस्तसंभव-
स्वर्धुनीसलिलपूतमानसाः ।
अम्बिकाकनकपादपङ्कजे-
ऽपूजयन् सुललितैश्च नामभिः ॥ ८२ ॥

श्वेतपीतहरितारुणैः सुमैः
सोऽर्चयन्नुपहृतैः सुगन्धिभिः ।
आननन्द पुरि नीललोहितं
धातृविष्ण्वनिदिताङ्घ्रिमस्तकम् ॥ ८३ ॥

यात्रिकां तितनिषुर्गुरुः प्रभुः
भद्रपीठमधितस्थिवान्क्रमात् ।
निर्भुवन्विविधधर्मपद्धतिं
नैगमोचितमथोचिवान्हितम् ॥ ८४ ॥

कन्यकाकुलपरम्परादृता
काङ्क्षिताधिकसमृद्धिदायिनी ।
सेवितान्वयपुरातनैर्जनैः
सेव्यतामपि भवद्भिरीश्वरी ॥ ८५ ॥

आदृतिर्व्यवहृतिश्च कर्मणि
प्राक्तनी परिचिता च देवता ।
अन्ववायसहजा प्रशस्यते
तद्विलङ्घनमभूतिकारणम् ॥ ८६ ॥

शास्त्रविप्रवचनेष्वनादरो
मा भवत्वभितदुष्कृतायनम् ।
संपदे गिरिसुतापदाम्बुजे
भक्तिरस्तु सुकृतायनं सदा ॥ ८७ ॥

एवमादि कथयन्हितं वचः
सिद्धवागनुमुखोद्भवान्गुरुः ।
ऊरुजान्फलमुखैः शुभाक्षतै-
राशशास नितरां शुचिस्मितः ॥ ८८ ॥

तत्र चैव विषये शुभाश्विनं
नावरात्रमपि संविधाय सः ।
धर्मनामनगरं यथार्थयन्
कृष्णनामगिरिमभ्युपेयिवान् ॥ ८९ ॥

यत्र पूः क्षितिसुरादिमानुष-
प्रीतिनिर्मितसुमोच्चतोरणा ।
ऋद्धवस्तुभृतपण्यवीथिका
भाति रम्यसरणिर्मनोहरा ॥ ९० ॥

नागशैलधवलेतराचला-
न्तरा विकचपङ्कजोज्ज्वला ।
सा विभाति फलगुच्छगुम्भना-
निर्गलन्मधुरसा फलावृता ॥ ९१ ॥

तत्र मङ्गलघटादिपाणिभि-
र्भक्तिमद्भिरतिमोदभारिभिः ।
अर्पितामुपहृतिं स नन्दय-
न्नाशिषः प्रयुयुजे स सर्वदाः ॥ ९२ ॥

तस्मात्परं पुरनिवासिभिरन्वितोऽभू-
द्भक्तैः सुदूरमधिकादरसान्द्रचित्तैः ।
दाता यथा स्मितमुखोऽर्थिभिरादरार्द्रैः
पुष्पोच्चयश्च मधुलिड्भिरिवेष्टगन्धः ॥ ९३ ॥

अभिमतपथदर्शी सेव्यते स्मानिलेन
स्फुटितकुटजपुष्पामोदभारोद्वहेन ।
जलदनिनदहृष्यद्बर्हिकेकानिनादैः
क्षितिधरनिवहैः स स्वागतं पृच्छ्यते स्म ॥९४॥

तदनु यमिमरुत्वान्यामिनीकान्तवक्त्र-
च्छविभृतमृदुहासासेकपूतायनेन ।
हृदयपदविमर्शी प्राप कर्णाटराज्ये
प्रचुरकनकदायिक्षेत्रकोलाप्रदेशम् ॥ ९५ ॥

इति श्रीनृसिंहभारतीविजये
द्वितीये भागे तृतीयः सर्गः ।

---

# चतुर्थः सर्गः ।

तत्राधिकारी प्रथमः श्रीकण्ठेश्वरसंज्ञितः ।
आसीदनन्यसुलभप्रीतिपात्रं गुरोस्तदा ॥ १ ॥

यः शेषाद्रे राजकल्पाल्लब्धविज्ञानभूषणः ।
सचिवात्तन्त्रनिष्णातो गुरौ भक्तश्च भूभृति ॥ २ ॥

गुर्वाज्ञामालिकाभूषः पीतभक्तिसुधारसः ।
सद्गुणप्रावृतो धीमान् शेषाचलपदानुगः ॥ ३ ॥

उत्साहगिरिसंरूढभक्तिवल्लीसमुद्भवम् ।
आजह्रेऽर्घ्यममूल्यं स श्रेष्ठं वस्तुमनोहरम् ॥ ४ ॥

गुरुसेवासमुत्कण्ठबहुभक्तसखानुगः ।
उपायनैरभिनवैरुपतस्थे स सद्गुरुम् ॥ ५ ॥

तत्पुरं स नतैः शिष्यैः श्रीकण्ठेशादिभिर्ययौ ।
भक्तिश्रद्धादरोपात्तफलपुष्पादिपाणिभिः ॥ ६ ॥

आस्थानसदस्यैश्चिह्नै राजकीयैश्च संवृतः ।
आरात्पुरात्समारूढो याप्ययानं गुरुर्बभौ ॥ ७ ॥

दीपैरारात्रिकैर्माल्यैर्युतायाः मधुरैः फलैः ।
मूर्तं पुर्यास्तदा जज्ञे रामणीयकमद्भुतम् ॥ ८ ॥

आसेचनकसंभारसंभृतेऽत्र शिवालये ।
वसन् सभाज्यमानोऽग्र्यैः पुष्पाद्यैः पिप्रिये गुरुः ॥९॥
देशेऽस्मिन् गुरुजीमूतो वीक्षणालापवर्षणैः ।
आतन्वन् फलितं नम्रं शिष्यसस्यं ययौ क्रमात् ॥१०॥
द्विपदान् धर्मसंतुष्टान् घासतृप्तांश्चतुष्पदान् ।
षट्पदान्कुसुमालीढानन्तरष्टापदानपि ॥ ११ ॥
सर्वाञ्ज्ञानपदानन्याञ्जङ्गमाजङ्गमानपि ।
करुणानयनेनासौ पोषयामास स स्वयम् ॥ १२ ॥
ख्यातिं लेभे समृद्धार्थः स प्रदेशोऽन्यदुर्लभाम् ।
अवसद्दिवसान्यस्मिन् षट्चत्वारिंशतं गुरुः ॥ १३ ॥
स तत्र बहुभिर्मित्रैः श्रीकण्ठो जगतां गुरुम् ।
आराध्य चन्द्रमौलिं च लेभेऽमूल्यां शुभाशिषम् ॥१४॥
अनुयुज्य शुभं सर्वान्नियुज्य विहिते पथि ।
नीहारभूधराकारं सोऽपश्यन्नन्दिभूधरम् ॥ १५ ॥
सरस्यमनुसंधित्सुः स्वमनोनिर्मलं सरः ।
सस्मार मानसाकारं स्फटिकोदं सुधामयम् ॥ १६ ॥
दृश्यं सुवर्णमाघ्रेयं सुगन्धिकमलोत्पलम् ।
श्राव्यं सभृङ्गनिनदमास्वाद्यममृतोदकम् ॥ १७ ॥
स्पृश्यं शीतं सरो ध्येयमीशावयवसंयुतम् ।
सन्निधौ सद्गुरोः सत्यसङ्कल्पस्यास तद्गिरौ ॥ १८ ॥

क्रीडन्मीनचलत्पद्मभृङ्गझंकारशोभिनि ।
स सिष्णासुरभूत्तत्र कुरुक्षेत्रह्रदोपमे ॥ १९ ॥
सस्नौ यत्र पुरा हंसराजेन गुरुणा सह ।
सर्वसन्तापनिर्वाणदायिवीक्षाझरीयुजा ॥ २० ॥
तदिङ्गितविदा तत्र सचिवेन विपश्चिता ।
यथागुर्वाशयं सर्वं चक्रे श्लक्ष्णोटजादिकम् ॥ २१ ॥
बुद्धिर्यस्यास्ति सहजा निर्झरारामभूमिषु ।
वासे समाधिसंसिद्धियोग्येष्वप्यचलादिषु ॥ २२ ॥
आरुह्य च ततः शैलमाजगाम वरं सरः ।
स निरीक्ष्य तदच्छोदं सिष्णासुरभवन्मुदा ॥ २३ ॥
तमब्रुवंस्तु नीहारतुषारमचले सरः ।
तदस्मिन् भिषजः स्नाने शीतबाधा भवेदिति ॥ २४ ॥
उक्तोऽपि स्मयमानोऽसौ स्नातुमेवोपचक्रमे ।
जितामयो भिषग्दैन्यः सदास्य हृदयेऽस्ति हि ॥ २५ ॥
एकको भस्मशुभ्राङ्गः स कौपीनैकसंवृतः ।
स्नात्वा तटेऽस्य सरसः सर्वं कृत्यं समापयत् ॥२६॥
आकल्यमा च सायाह्नान्निर्द्वन्द्वोऽसौ यतिः स्थितः ।
निर्विकल्पसमाधिस्थः पर्णशालामथाययौ ॥ २७ ॥
अभूच्छूल इवाथास्मिन्हिमानीप्रभवो गुरौ ।
शङ्करोऽप्यभवद्भुग्णः कदाचित्स्वर्धुनीतटे ॥ २८ ॥

अबाधत रुजा तस्य रात्रौ देहमदेहिनः ।
संस्थानस्थास्तथान्ये च भृशमातङ्किनोऽभवन् ॥ २९ ॥
चिकित्सया विनैवायं समुल्लाघोऽभवद्गुरुः ।
तद्दृष्ट्यान्येऽपि मुच्यन्ते व्याधितः क्षेत्रियादपि ॥३०॥
स्वर्भानुः किं चिरं भानुममृतांशुं च बाधते ।
निराधिकस्य किं तिष्ठेद्व्याधिर्देहे वशं गते ॥ ३१ ॥
ततोऽवरुह्य शिखरात्सेवकैरभिसंवृतः ।
शिक्कपल्लपुरे सर्वां पूजां तेने यथा पुरा ॥ ३२ ॥
तत्र विश्रम्य दिवसान् कतिचिद्गुरुवासवः ।
भासयन् संभृतं पौरैर्मङ्गलं पुरमाययौ ॥ ३३ ॥
कीलकाब्दसमारब्धो मठस्तत्रातिविस्तृतः ।
आचार्यमानसाकारो देवतक्ष्णेव निर्मितः ॥ ३४ ॥
आसेचनकमत्युच्चः शिल्पकौशलजन्मभूः ।
उदभूद्विधुवत्तावद्यावद्गुरुरुपाययौ ॥ ३५ ॥
भारतो ह्युत्तमः खण्डो वेदशास्त्रापगाद्रयः ।
अमरप्रीतिदा धर्मा वर्तन्ते यत्र शाश्वताः ॥ ३६ ॥
कर्णाटानां वरं राज्यं विद्यारण्यकृपास्पदम् ।
वैदेह इव भूपालो यत्रास्ते विबुधप्रियः ॥ ३७ ॥
न केवलं धर्मशालाः स्वस्मिन्राष्ट्रेऽस्य सन्ति तु ।
सेत्वादिषु तथा पुण्यभूमिष्वपि समिन्धते ॥ ३८ ॥

सुरेश्वरप्रियं तुङ्गाशारदापीठमुत्तमम् ।
ऋष्यशृङ्गो मुनिर्यत्र शाश्वते ब्रह्मणि स्थितः ॥ ३९ ॥
मङ्गलाख्या पुरी श्रेष्ठा नाककल्पा कलाप्रसूः ।
यत्रास्ते भगवाञ्छंभुर्नन्दिरूपोऽचले सिते ॥ ४० ॥
विद्यानवद्या वेदान्तवेद्या विद्यासु संमता ।
यत्रास्ते मोददुग्धाब्धिर्निस्तरङ्गो निरामयः ॥ ४१ ॥
राजते परमा संसत्सर्वसंसन्निदर्शनम् ।
यत्र श्रीभगवत्पादः श्रीनृसिंहप्रतिष्ठितः ॥ ४२ ॥
सर्वविद्याप्रचाराय सा सभा निरमीयत ।
श्रीमत्सच्चिच्छिवानन्दगुरुहृत्कमलाकृतिः ॥ ४३ ॥
प्रथमं प्रापयामास तं मठं शङ्करं गुरुम् ।
शारदाचन्द्रमौली च स हि सर्वशुभोत्तरः ॥ ४४ ॥
प्रतिवीथि प्रतिद्वारं प्रत्येकं च नतान् जनान् ।
पृच्छन्श्रेयान् शुभंयुत्वं हृद्यचश्चेष्टितेङ्गितैः ॥ ४५ ॥
ततः स नगरीं पश्यन् जपमालालसत्करः ।
सिद्ध्यष्टकसमायुक्तो लक्ष्मीं संयोजयन्ययौ ॥ ४६ ॥
अनुभूतचराशास्याः सुलोचनममायिनम् ।
भक्तास्तं मेनिरे शम्भुं चन्द्रसूर्याग्निलोचनम् ॥ ४७ ॥
एवं स नागरैः स्मेरैराशंसुर्भूसुरैर्वृतः ।
रम्भापूगाम्रसंशोभिमठद्वारमुपेयिवान् ॥ ४८ ॥

मुख्यहस्तं समालम्ब्य सर्वप्राण्यभयप्रदः ।
आरोहणेऽस्य चरणं दक्षिणं संन्यधाच्छुभम् ॥ ४९ ॥
प्रत्यग्दृष्टेर्गुरोः शिष्टया प्रतीचीवदनो मठः ।
सिद्धा देवगृहं सिद्ध्यै पश्चिमद्वारमूचिरे ॥ ५० ॥
निर्वृत्तसमुदाचारस्तत्र सोपानपङ्क्तिषु ।
दिदीपे स गुरुर्गच्छन् सिद्धावावेदयन्क्रमम् ॥ ५१ ॥
आदौ स पश्चिमे देशे शुद्धस्फटिकसंनिभम् ।
ववन्दे भगवत्पादं शङ्करं दक्षिणामुखम् ॥ ५२ ॥
कैलासशिखराकारे मन्दिरे यः प्रतिष्ठितः ।
आदिशन्दीप्यते प्राणप्राणं सूक्ष्मं स्वयंप्रभम् ॥ ५३ ॥
प्रदक्षिणनमोवाकमुखां तस्य परार्हणाम् ।
विधाय विधिवत्सर्वां वीध्रांमन्तर्विवेश सः ॥ ५४ ॥
आलोकशब्दः संजज्ञे पुष्पवर्षश्च सन्ततः ।
वेदघोषो वाद्यघोषः ककुभः प्रतिनादयन् ॥ ५५ ॥
महदाचार्यचरितं सुस्वराश्च कुशीलवाः ।
सुधर्माभा सभा स्वस्था लिखितेवास तत्तदा ॥ ५६ ॥
धूलिपूजादिकं सर्वं यथावदुदपादि च ।
गुरोर्जग्मुस्ततः साकमाशिषा च श्रिया जनाः ॥ ५७ ॥
माधवः सचिवः प्रह्वस्तं तं देशं कृपादृशम् ।
दर्शयामास सदृशं देशिकं धर्मदर्शकम् ॥ ५८ ॥

१. वीध्रां विमलां

मठो विशालः सदृशः प्रीतेस्तुष्टेर्मतेर्धृतेः ।
भूतेः कीर्तेरुद्भवद्देशिकस्योत्तमस्य सः ॥ ५९ ॥

विच्छन्दकोऽयं मध्येऽस्मिन्नङ्गणाभरणोज्ज्वलः ।
अर्हणायै सुपर्याप्तश्चन्द्रमौलेः समेधते ॥ ६० ॥

इतः प्रस्थातुकामानां विवाहसमये नृणाम् ।
माङ्गल्यधर्मसंतानसंपद्वृद्धिर्भवेद्ध्रुवम् ॥ ६१ ॥

संक्षिप्तेनैव कालेन छात्राणामिह तिष्ठताम् ।
फलति प्रचुरं विद्या कल्पवल्लीव काङ्क्षितम् ॥ ६२ ॥

भूषा भारतमण्डल्याः शङ्करानुग्रहोदिता ।
पितामहसभेवेयं धर्मभासा सदैधताम् ॥ ६३ ॥

अल्पेन समयेनैव मयेनेव विनिर्मितः ।
शिल्पिना भात्ययं सौधः शिलापट्टोज्ज्वलक्षमः ॥६४॥

इत्यादिवाणीं मधुरां भाषमाणोऽनुगृह्य तम् ।
शारदायाः प्रसादेन गुरुः स्नानाङ्गणं ययौ ॥ ६५ ॥

मध्येनभोऽर्यमा देवः प्रसन्नकरभासुरः ।
मध्येसभं महाराजो वर्तते माधवप्रियः ॥ ६६ ॥

आकर्ण्य वन्दिगीतं तत्कृष्णराजं सहानुजम् ।
व्यश्राणयदथानाय्यं तीर्थं तस्मै भवागदम् ॥ ६७ ॥

तत्पवित्रं ततः पीत्वा मत्वा स्वं च पवित्रितम् ।
चक्रराजार्चनं तेने भूपतिर्ललितापदैः ॥ ६८ ॥

कृत्वा च भगवत्पादनमस्यां तस्य नामभिः ।
मेने कृतार्थमात्मानं विक्रमार्कसमो नृपः ॥ ६९ ॥
कारुण्यदुग्धसंपूर्णा कामधुक् शारदाप्रसूः ।
कुमाराभस्य नृपतेरातिथ्यं ते विधित्सति ॥ ७० ॥
उपयुज्य प्रसादं तं तस्याः सान्तःपुरानुजः ।
पुत्रिणां त्वं धुरि स्थेया दिलीप इव विश्रुतः ॥ ७१ ॥
भरद्वाजसमस्यास्य गुरोर्वाक्यं प्रियं हितम् ।
अभ्युपागमदेतत्स नृपालो भरतोपमः ॥ ७२ ॥
वसिष्ठहृदयाभिज्ञकामधेन्वन्नसप्रभम् ।
गुरुवाक्शारदादत्तं भक्तं भक्तो जघास सः ॥ ७३ ॥
भोजनं मातृदत्तं हि संतोषाय प्रशस्यते ।
किं पुनः सर्वजननीदत्तं सर्वसुखास्पदम् ॥ ७४ ॥
वात्सल्यं मूर्तिमह्लाल्यं शारदाधेनुसंभवम् ।
क्षुत्पिपासापहं शुद्धं नानागन्धरसावहम् ॥ ७५ ॥
कृत्तिकादत्तदुग्धाभं यशो मूर्तमिव स्थितम् ।
कार्तिकेयोपमो राजा भुक्त्वा तन्मुमुदेऽद्भुतम् ॥ ७६ ॥
राजन्राज्ञां भवेरग्र्यो दातॄणां वाग्मिनां तथा ।
इत्याद्यभिवदन्प्रादान्मालां तस्मै स देशिकः ॥ ७७ ॥
दृश्यां स्पृश्यां च तां लब्ध्वा राज्यलक्ष्मीमिवानघाम् ।
स जायामातृसोदर्यैः प्राप सौधं महेन्द्रवत् ॥ ७८ ॥

भक्तदुर्वारसंतापहरमर्चन्तमीश्वरम् ।
शिशिरः क्रौश्चनिनदैस्तुष्टाव गुरुमज्वरः ॥ ७९ ॥
रात्रिः सुधांशुकिरणप्रावारपरिवेष्टिता ।
गुरुसेवावदातेव प्रालेयधवलाभवत् ॥ ८० ॥
नार्यो रुद्धगवाक्षान्तर्गृहसंवेशना अपि ।
सेवितुं शारदां प्रापू रात्रौ क्वणितनूपुराः ॥ ८१ ॥
तदा माघे गुरोर्वाक्यात्सायं संसद्यराजत ।
राजर्षिः कृष्णराजस्तामियाय शुभवेषधृत् ॥ ८२ ॥
सचिवाद्यास्तथान्ये च प्रधाना नागरा जनाः ।
राजानं तमनुप्रापुर्मरुत्वन्तमिवामराः ॥ ८३ ॥
बुद्धौ बृहस्पतिं ज्ञप्तौ सनकं ह्लादितौ विधुम् ।
सिद्धौ सिद्धं धृतौ मेरुं निष्ठितौ शुकतापसम् ॥८४॥
रक्षितौ वेदमार्गस्य भगवत्पादमागताः ।
नत्वा भद्रासनस्थं तं यथाक्रममुपाविशन् ॥ ८५ ॥
ततस्तपश्चक्रवर्ती स्मयमानाननाम्बुजः ।
स्वरेण मधुरेणैवमुवाचान्तेनिवासिनः ॥ ८६ ॥
जाने पूर्वं प्रतिग्रामं वेदशास्त्रादिपण्डिताः ।
अध्यापयंस्तत्तदर्हान्वर्णिनोऽन्यांश्च तत्पराः ॥ ८७ ॥
धर्मश्च परमः सौख्यसंपद्धेतुर्व्यवर्धत ।
सर्वेष्वपि च तन्त्रेषु कुशलाश्चाभवन्बुधाः ॥ ८८ ॥

वृत्तिचिन्ता न चैवासीत्तेषां धर्महृदां हृदि ।
आढ्याश्चाकिंचनास्तुल्यास्तुष्टिर्वित्तं तु पुष्कलम् ॥८९॥
यत्र यत्राभवत्पूर्वं वर्णाश्रमपथः सुगः ।
विद्याधर्मसदाचारलोपः सर्वत्र तत्र हि ॥ ९० ॥
कां वृत्तिं वयमालम्ब्य जीवाम इति भूसुराः ।
अपि पृच्छन्त्यमन्यन्त ये पूर्वं प्राक्तनं शुभम् ॥९१॥
तद्भारतीयगीर्वाणप्रौढविद्याभिवर्धनी ।
नाम्नात्र पाठशालेयं स्थापनीयेति मे मतिः ॥ ९२ ॥
अध्याप्यास्तत्र पञ्चाशच्छात्रा ये काव्यशिक्षिताः ।
पाणिनीयादितन्त्रेषु लब्धज्ञानाश्च सुव्रताः ॥ ९३ ॥
संप्रदायानुसारेण श्रुतिस्मृत्यर्थसंग्रहः ।
मीमांसावगमश्चैव कर्तव्योऽत्र पुरातनः ॥ ९४ ॥
आवासौदनवस्त्रादि देयं चैभ्यो यथोचितम् ।
येन विद्या सदास्वाद्यामियात्प्राचीनपद्धतिम् ॥ ९५ ॥
योगक्षेमादियोग्यं च प्रदेयं पारितोषिकम् ।
तेनाम्नायाङ्गतन्त्राणि रीतिमेष्यन्ति वैदिकीम् ॥ ९६ ॥
महाराजस्त्वयं भोजः कार्यायास्मै प्रभुर्भवेत् ।
अन्येऽप्यत्र सहायाः स्युर्विद्यादानफलाप्तये ॥ ९७ ॥
धर्म्यं द्रव्यं ददुः पूर्वं राज्येऽस्मिन् यत् स्थिरं नृपाः ।
तदेकदेशं धर्मज्ञो विनियुङ्क्तां नृपोऽत्र च ॥ ९८ ॥

शाला ज्योत्स्नालतेवेयं वर्धेत यदि शारदी ।
कल्पवृक्षनृपोपन्ना भूयस्यै स्यान्मुदे ध्रुवम् ॥ ९९ ॥
अल्पारम्भः क्षेमकर इति लौकिकभाषितम् ।
तद्ब्रावध्यापकौ स्यातामष्टावध्यायिनस्तथा ॥१००॥
द्वे मीमांसे अपि श्रेष्ठे कर्मब्रह्मपरे दृढे ।
अध्यापनीये विद्वद्भ्यां निष्णाताभ्यां गुरूक्तिषु १०१॥
देशिको विस्तरेणैवं वारिदस्तनितस्वनः ।
ववर्ष स सुधासारं वेदसारं महासुहृत् ॥ १०२ ॥
ततोऽस्तुवन् गुरुं शिष्या महाराजपुरोगमाः ।
एतत्कर्तुं कलौ को वा पर्याप्नोति गुरुं विना ॥१०३॥
आचार्य एव प्रथमो भूमाववततार वा ।
जैमिनिः सूत्रकृद्व्यासः षडास्यो वा पतञ्जलिः ॥ १०४ ॥
अगस्त्यो वा मुनिर्ब्रह्मा सर्ववेदप्रवर्तकः ।
अद्धा पूर्णादयं योगी लोकभाग्यादजायत ॥ १०५ ॥
धन्या वयं पुरी धन्या धन्या कर्णाटकावनी ।
धन्यो भारतखण्डोऽयं गुरुरेवं प्रशास्ति नः ॥ १०६ ॥
काव्यशास्त्ररसज्ञोऽसौ गुणरत्नाकरो नृपः ।
अचञ्चलां श्रियं लब्ध्वा वीक्षमाणो गुरुं ययौ ॥१०७॥
अन्येऽप्यचिन्त्यमहिमाचार्यवागमृताशिनः ।
शासनं लेभिरे मान्यं संप्रहृष्टतनूरुहाः ॥ १०८ ॥

एतादृशो यदि गुरुः संन्यासी स्वात्मनि स्थितः ।
निष्कामो यदि राजन्यो धर्मलक्ष्मीनिवासदृक्॥१०९॥
ब्रह्मात्मैक्यावबोधाय विद्यास्वाद्या सुधा यदि ।
कल्याणनगरस्यास्य नाकः स्यात्सदृशस्तदा ॥ ११० ॥
माधवः सचिवः शंवः शाम्भवो निकषा मठम् ।
दाता दित्सुर्विपश्चिद्भ्यः सप्त गेहानि निर्ममे ॥१११॥
धर्मैकनिष्ठस्तान् सर्वानार्पिपद्गुरवे गृहान् ।
बुद्धिर्हि ब्रह्मवित्संगात् शाश्वतं धर्ममीक्षते ॥ ११२ ॥
सद्विद्यारक्षणं मेने शारदापचितिं हि सः ।
पुमर्थप्राप्तये विद्यां वैदिकीं सुधियो विदुः ॥ ११३ ॥
संगतिर्हि सहायास्ते सतां साधुपथेक्षणे ।
शश्लाघे स गुरुस्तस्य मतिं नवनवोद्भवाम् ॥ ११४ ॥

पुरीं तां घस्रांस्त्रीन्दश च समवेतामधिवसन्
स पर्यासक्तश्रीनृपसचिवभक्तैर्यतिपतिः ।
नृपालं तद्धर्मान् सचिवसहितं तत्तदुचितान्
ब्रुवन्नन्यान् शिष्यान्व्यजयत गुरुर्द्वन्द्वरहितः ।११५॥
दीनानर्थिजनान्धनैर्बुधजनान्संमाननैरीप्सितै-
र्मन्त्रासक्तजनान् शुभैश्च मनुभी रुग्णान् जनान्भस्मना ।
संसारार्तजनान्गुरुर्गिरिसुताजान्यादिपूजाक्रमै-
स्तुष्टांस्तत्र विधाय सर्वहितकृद्भूयोऽनुमेने गमम् ॥११६॥

इति श्रीनृसिंहभारतीविजये द्वितीये भागे चतुर्थः सर्गः ।

# पञ्चमः सर्गः ।

आचार्यस्तदनु समस्तराजकीयैः
गायद्भिर्गमनसमर्हगीतजालम् ।
आसीमं विनयधनैर्निषेव्यमाणः
सर्वेभ्यः फलमददादभीतिसिद्धिम् ॥ १ ॥

आनम्रान्कलमचयानिवाभिरामान्
संपश्यन्सफलकरानमन्दभक्त्या ।
सच्छिष्यान्परिकलयन्दृशा च तुष्टा-
नभ्यागाज्जलधिसुतेशवासभूमिम् ॥ २ ॥

मार्गेऽस्मिन्यातिनृपतेर्महाशयस्य
पुस्फोर क्षणमथ वामनेत्रबाहु ।
स्वान्तं तु स्थिरमपि किञ्चिदाशशङ्के
क्षेमं स्यादिति कलयन्परं स आस ॥ ३ ॥

अश्रौषीदथ कठिनां बुधोक्तवार्तां
श्रीकण्ठस्तदनु भृशं बभूव खिन्नः ।
शृङ्गाद्रौ नवगृहमद्य शारदायाः
संभिन्नं त्रुटितशिलं च वह्निनेति ॥ ४ ॥

अम्बायास्तरुवरणोऽग्निसादभूत्त-
दप्येवं दहनकणोऽपि देहमस्याः ।
नास्प्राक्षीद्रुचिमहितं दुरन्तशक्तेः
स प्रार्चिः प्रसरति किं स्वरूप एव ॥ ५ ॥

रोचिष्णुं पतिहृदयामलंक्रियाभि-
र्दीप्राभिः क्षितितनयामशोकमूले ।
किं सीतां पवनसखः प्रभाशरीरां
पस्पर्श प्रतिभयहेतिमालभारी ॥ ६ ॥

शृण्वन्तः समयविदो बुधा वदन्ती-
मुत्पातं भुवनततेः शशङ्किरे ताम् ।
नात्रासीदतिदुरितं पुरा कदाचि-
न्नाकस्मान्निजनियमं जहाति भूतम् ॥ ७ ॥

वृत्तं तत्तदनु गुरुं बुधः प्रधानो
निर्विण्णः सभयमुवाच खिन्नखिन्नः ।
को वा तामशुभमयीं गिरं वदेत्तं
वाग्देवीतनुसदृशं दयापयोधिम् ॥ ८ ॥

श्रुत्वैतन्नयनजलैश्चकम्पिरेऽन्ये
निःशब्दा विनतमुखा विलीनभावाः ।
योगी तु स्वयमभवद्विकारहीनो
धीराणां प्रकृतिरियं हि निस्तरङ्गा ॥ ९ ॥

ब्रह्माख्यं विबुधसुरारिसंप्रहारे
सज्ज्योतिर्दितितनुजान्सुरा विजिग्ये ।
सृष्टिस्थित्यपगमकारणं सुरार्थं
लोकस्थित्यवनपरं समस्तशास्तृ ॥ १० ॥

तत्सत्यं मखमुखधर्मरूपमेत-
त्सूर्येन्दू खलु विधृतौ तदाज्ञयैव ।
सप्तर्षिप्रमुखसमस्तऋक्षचक्रं
संभ्राम्यत्यनिशमनन्तमत्युदारम् ॥ ११ ॥

सर्वज्ञं शुभपददं सुधाशनानां
तन्मिथ्याप्रभववृथाजयाभिमानम् ।
संहर्तुं कुशलकृते तदाविरासी-
दाश्चर्यं किमपि महःस्वरूपमारात् ॥ १२ ॥

आकाशप्रमुखजगद्विसर्गहेतु-
स्तस्य स्वा त्रिगुणमयी दुरूहमाया ।
तत्स्वस्थां प्रकृतिमिमामचिन्तनीयां
स्वीकुर्वञ्जगदवितुं किलाविरास्ते ॥ १३ ॥

यक्षं तं विविदिषवो दिवौकसोऽग्निं
प्राहिण्वंस्तदभिहित तृणं च दग्धुम् ।
निर्वीर्यः स न दहनो विदांचकार
ज्ञातुं तन्न किल शशाक मारुतोऽपि ॥ १४ ॥

ईशेच्छाऽचलमपि तूलसप्रमाणं
तूलं वाप्यचलनिभं पराविधत्ते ।
सौमित्रिं न हि दुधुवे बलेन रक्षो
मित्रं तं पवनसुतो दधार शान्तः ॥ १५ ॥

इन्द्रस्तौ कुलिशकरस्ततो विदित्वा
संशान्तौ तदनुययौ दिदृक्षमाणः ।
तद्गर्वं प्रशमयितुं तिरोदधे त-
ज्ञ्ब्रह्मादित्ययमपि नु प्रकामगर्वम् ॥ १६ ॥

तत्रैवं दुरधिगमे तिरोहितेऽस्मि-
न्निध्यानं बहु कृतवान् स शान्तदर्पः ।
अद्राक्षीद्वियति शिवामुमां सुवर्णां
सावोचत्सुरविजयं महेशनिघ्नम् ॥ १७ ॥

यद्ब्रह्म ज्वलनमरुत्सुरेन्द्रगर्वं
निर्धूय स्फुटमभवन्निरीक्षणीयम् ।
तत्सत्यं भवतु नृणामपीक्षणीयं
प्रत्यक्षं त्विति जननीप्रभाव एषः ॥ १८ ॥

तन्माभूद्धृदि भवतां विषादलेशः
किं स्याद्धीरभयवरादिहस्तदेव्याः ।
देशेऽस्मिन्निति वचनैरसान्त्वयत्ता-
न्नेदिष्ठान्स तु मनुजान्विषादसन्नान् ॥ १९ ॥

आश्वास्य प्रियवचनैः शनैर्विनेया-
नाचार्यः सविधगतान्परावरज्ञः ।
सद्विद्यारसलहरीनिमग्नचेताः
सद्रूपं जगदखिलं पराममर्श ॥ २० ॥

श्रीजाने श्रितजनरक्षणैकदीक्ष
ग्राहार्तं द्विपमवसि स्म दैन्यमग्नम् ।
वैकुण्ठाद्द्रुतमभियन् कृपासमुद्रः
कारुण्यं निरवधि ते गतप्रभेदम् ॥ २१ ॥

आवेगाहृतजलदेऽवदातकण्ठे
दैत्यारे नभसि मुदा गरुत्मति त्वम् ।
आसीनः कनकमयच्छदे विचित्रे
मूलत्वं परमवदः समस्तसृष्टेः ॥ २२ ॥

व्याकोचे हृदि तपसा स्वयंप्रभासं
योगीशा वियति परे नितान्तशान्तम् ।
आकाशं दहरतरं विचिन्तयन्तः
क्रीडन्ति प्रमदनिधिं निरस्तभेदम् ॥ २३ ॥

नक्रार्तं गजमिव मोहवक्त्रलग्नं
रक्ष त्वं निगमशिरोललामभूतः ।
आनीतं पदनलिनं जनं स्वभक्त्या
त्रातुं ते भवपतितं कृपालमेका ॥ २४ ॥

क्षीराब्धौ धवलतरङ्गजाललोले
भोगीशं फणमणिगुम्फभासुराङ्गम् ।
योगी त्वं सकलजगत्स्वरूपभूतो
भास्वत्या सह रमया सहाधिशेषे ॥ २५ ॥

शेषोऽयं गगनमुखोऽखिलप्रपञ्चो
दुर्ज्ञेयासदृशभवत्प्रभावजातः ।
तद्देहस्तदविदितोऽखिलान्तरात्मा
शेषी सन्नुरगशयः स्तुतोऽसि देवैः ॥ २६ ॥

विश्वात्मन्विकचसुवर्णनाभिपद्म
स्वच्छन्दप्रभवविधातृदिव्यपत्न्याः ।
विद्याया निगमतनोर्विलासगेहं
विख्यातं सकलजगच्छुभाय भातु ॥ २७ ॥

भूम्नः सा खलु महिषी प्रभा तुरीया
शर्वाणीशयकमलाशतच्छदस्था ।
दुर्ज्ञेया दुरधिगमास्थितिस्त्रयाणां
देवानां परिविलसत्यनन्यभूता ॥ २८ ॥

निर्वाणप्रदचरणा विभातु वाणी
नित्यश्रीततिपरिवीतगात्रयष्टिः ।
नित्याभा निगमशिरोललन्तिकाभा
निःसीमस्थितमहिमा नवावृतिस्था ॥ २९ ॥

भद्राङ्गी परिदधती शुकाक्षमाला-
ग्रन्थाब्जान्यधिमधुनीरतुङ्गभद्रम् ।
वाग्देवी विधुशिशुराजमानशीर्षा
श्रीवीणां विलसतु साधु वादयन्ती ॥ ३० ॥

विश्वात्मन्विकचसहस्रपत्रनेत्र
प्रख्यातप्रणवगृहप्रशस्तरूप ।
क्षीराम्भोनिधितनयाकटाक्षवीची-
संमिश्रस्मितरुचिहारशोभमान ॥ ३१ ॥

भृग्वादिप्रथितमहर्षिगीयमान-
श्रीसामश्रुतिवचनार्थसारभूत ।
सर्वात्मन् सकलजगद्विसर्गरक्षा-
भङ्गस्वीकृतमहिमस्वरूपमाय ॥ ३२ ॥

आश्चर्यं त्रिदशपते तव स्वरूपं
को वा स्यात्प्रभुरखिलं प्रवक्तुमग्रयम् ।
यन्नित्या भणितिरपि स्वतो निकामं
नेत्येव प्रथयति ते स्वरूपमाद्यम् ॥ ३३ ॥

इत्यादि स्तुतिवचनं नवं वितन्वन्
मन्वानः शुभमनिशं कृतेरुदर्कम् ।
योगी श्रीपतिगृहतः शुभानुयायी
प्रस्थातुं प्रथमबुधं ततोऽनुमेने ॥ ३४ ॥

---

१. गायन्ती विलसतु कच्छपीं विचित्रम् ।

एकाकी यतिपतिरप्यसावुदारो
 वाग्देवीपदकमलं पदं समृद्धेः ।
निध्यायन्नृपपुरुषैर्निरस्तदोषै-
 र्गुप्तोऽसौ पथि विचचार साधु देशान् ॥३५॥

कत्यग्रे हयमनुजा यतेर्द्विपस्थाः
 कत्यासन्यतिमभितः पदातिसङ्घाः ।
पृष्ठे तं समनुययुर्गृहीतशस्त्राः
 कत्येतन्न गणयितुं शशाक कोऽपि ॥ ३६ ॥

मध्येऽसावधिगिरि वारिपर्ववत्सु
 स्थानेषु प्रविशिथिलं विभिन्नदिक्कम् ।
निम्नस्थे पयसि जलं पयोदसिक्तं
 संपश्यन्गिरमधियन् श्रुतेरुदास्त ॥ ३७ ॥

विश्वासादचलगतान्खगांस्तिरश्चः
 प्रत्यक्स्थो वनसदनांश्च वीक्षमाणः ।
आनन्दप्रसृतिशुभार्द्रदृष्टिपाता-
 द्रोमाश्वप्रचिततनून् स संव्यधत्त ॥ ३८ ॥

शान्तेशाचलनिकटोग्रकाननस्थान्
 शार्दूलप्रमुखमृगान्निरीक्षणेन ।
शान्तोग्रथ्यानतिसुहृदः शशास देवः

---

१. कठवल्ली ४-१४ —यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक्पश्यन् तानेवानुविधावति ॥

शान्तानां दशिमहिमा हि सौख्यहेतुः ॥ ३९ ॥
विस्तीर्णामुदधिसमानपूर्तरम्या-
माकीर्णां सुमनिकुरुम्बवर्षिवृक्षैः ।
संपूर्णां सृतिमभितो रसार्द्रसस्यै-
रभ्यर्णां पथि मुमुदे स लोकमानः ॥ ४० ॥
कान्तारं मदविहरद्द्विपप्रचारं
गम्भीरं पवनविलोलकीचकौघैः ।
आधारं सुरभिलसन्नवौषधीनां
नीहारद्युतितितिभृत्फलेग्रहीड्यम् ॥ ४१ ॥
संकूजच्छकुनविहारनम्रकम्र-
स्मेरोच्चक्रमुककदम्बमञ्जुलानि ।
उद्यानान्यलिकुलरावरम्यवृक्ष-
प्रच्छायान्यविरलितान्युदारभांसि ॥ ४२ ॥
कर्णाटक्षितिपमनोविराजमानं
सुश्लिष्टं परि समया महापथं सः ।
इत्येवं हरितवदातपीतरक्तान्
भूभागांस्त्रिदिवमहीसमानपश्यत् ॥ ४३ ॥
वाग्देवीं गुरुकरुणां क्षितीशभाग्यं
सौहार्दं हृदि कलयंश्चतुष्पदां च ।
आनन्दप्रभवशुचिस्मिताननेन्दुः
प्रख्यातं शुभमुकुलं पुरं ययौ सः ॥ ४४ ॥

तत्रस्थाञ्छिववसतीन् गुरुः स तन्वन्
सौहार्दप्रियवचनस्मितावलोकैः ।
भद्राशीर्यतिविनुतोऽधितुङ्गभद्रं
तीर्थाख्यं स मुनिरगाद्द्विजाग्रहारम् ॥ ४५ ॥

तत्रस्थप्रयतमठस्थलानुरूप-
त्यागिक्ष्माधरविनयोज्ज्वलार्हणाभिः ।
संप्रीतो निगमशिरोवचोविचारे
तान्क्षेमं प्रणवजपे च संबभाषे ॥ ४६ ॥

विद्यार्थीविनयविशुद्धितृप्तिसीमा-
विश्रान्तः श्रमरहितो विहारदेशे ।
वीक्षातः परिविदिताखिलागमार्थान्
विश्वासप्रणयनताञ्जनान्व्यधात्सः ॥ ४७ ॥

स स्वामी मधुकदलीविराजमानां
संकूजद्बहुविधकीरशुद्धगीताम् ।
भद्रायास्तटभुवमुच्छ्रितानुभावां
भद्रश्रीयुतनयनः समीक्ष्य तृप्तः ॥ ४८ ॥

मर्यादाधरणपरान्सुजीवनाढ्यान्
सद्विद्वन्मणिनिकुरुम्बभूष्यमाणान् ।
ग्रामान्धीननुतटिनीतटं समृद्धान्
स स्वामी प्रमदतरङ्गितान्ददर्श ॥ ४९ ॥

आयान्तं तदनु जगद्गुरुं प्रहृष्टा
भारत्या सह महिता च तुङ्गभद्रा ।
सस्वान श्रुतिमधुरं शुभैर्द्विजौघैः
कल्लोलैश्चलकमलैः समाजुहाव ॥ ५० ॥

तस्य श्रीयतिनृपतेः समागमार्हः
संजज्ञे शुभपटहध्वनिः प्रशस्तः ।
श्रीमत्या जननिवहस्ततो नगर्याः ।
सोत्कण्ठः सफलकरो विनिःससार ॥ ५१ ॥

पौरस्त्या जितमधुरे पुरे शुभश्री-
र्यम्णश्छविरिव देशिकस्य तस्य ।
वाद्यादिध्वनिमिलिता चचार नूत्ना
संनेहुर्वरिवसितुं नराश्च पुष्पैः ॥ ५२ ॥

आदित्यं नवमिव दृष्टिरश्मिजालै-
रज्ञानावृतितिमिरं पराणुदन्तम् ।
स्वान्ताम्भोरुहमुकुलं विकासयन्तं
शिष्यास्तं पदकमले प्रणेमुरार्यम् ॥ ५३ ॥

श्रीसाधारणशरदि प्रभातकाले
श्रीनित्यः शुभभुवि मासि फाल्गुनेऽसौ ।
श्रीमन्तं किल बहुलद्वितीयघस्रे
शृङ्गाद्रिं सकलनिधिं समाययौ सः ॥ ५४ ॥

आनिन्युर्गुरुसुरराजपादपद्मे
 विद्वांसः कुसुमफलाद्युपायनानि ।
तद्दृष्टिस्तदभिमतानि कल्पवल्ली
 कल्याणान्यतिसृजती विराजते स्म ॥ ५५ ॥

माकन्दच्छदमहितास्यपूर्णकुम्भै-
 रुत्तस्थुर्निगममुखा द्विजा गुरुं तम् ।
आशीर्वागमृतमुखी गुरोरुदारा
 तत्तापं विरहयति स्म हृन्मुखोत्था ॥ ५६ ॥

मुक्तौघद्युतिविजयिप्रसूनमाला-
 संपूर्णामथ नगरीं हिमार्द्रवीथीम् ।
नक्षत्रावलिबहुलां महोविशालां
 द्यां शुद्धां विधुरिव कान्तिमान्विवेश ॥५७॥

प्राप्तेभ्यः किसलयकान्तहस्तरक्तान्
 प्रत्यग्रान्सुमसुभगान् शुभाक्षतान्सः ।
प्रत्येकं प्रणमदुदारसज्जनेभ्यः
 प्रेमाग्र्यानमितसुखाकरान्व्यतारीत् ॥ ५८ ॥

योगीन्दुर्बिरुदवरैः कलानुरूपैः
 सद्भावप्रशमिततापदृग्विलासैः ।
तद्वीथीः शुभमुपयन्प्रदक्षिणेन
 प्रोत्तुङ्गं स मठमगात्समुत्पताकम् ॥ ५९ ॥

द्वारेऽस्य श्रितजनरक्षणैकदीक्षं
श्रीरामं जनकसुतातपोऽब्धिसोमम् ।
सौमित्रिश्वसनसुताप्तपार्श्वभागं
सोऽस्तौषीत्स्मितवदनः समाप्तकामः ॥ ६० ॥

त्वद्ध्यानं किल जगतां सुखैकहेतो-
र्धर्मस्य श्रुतिविहितस्य रक्षणार्थम् ।
पर्याप्तं भवति ततो विधाय यात्रां
राम त्वत्पदकमलं पुनः प्रपन्नः ॥ ६१ ॥

दुर्मार्गान्रजनिचरान्निरस्य सम्यक्
स्तुत्वोर्वीधरतनुजापतिं च देवम् ।
वैदेह्या गगनविहारिपुष्पकस्थ-
स्त्वं मात्रे मुदमददा हि राम भूयः ॥ ६२ ॥

आराध्य क्षितितनयापतिं स पुष्पै-
रामोदप्रचयगलज्जलाकुलाक्षः ।
आसीदन्विधिगृहिणीगृहं विचित्रा-
मारेभे स्तुतिभणितिं स्वतःसमुत्थाम् ॥ ६३ ॥

आज्ञातो विधिमहिले विधाय यात्रा-
मासेतोः प्रथमयतिक्षितीशजुष्टाम् ।
आस्थान्यामखिलगुरोर्विधाय निष्ठा-
मासीदं वरिवसितुं तवाङ्घ्रिपद्मम् ॥ ६४ ॥

अम्बाम्ब स्थिरकरुणाकटाक्षलक्ष्म्या
निःशेषामरविनुतोऽमितः प्रभावः ।
संपत्त्या सह मनुजान्मतान्विधत्ते
माता हि प्रथमगुरुः श्रुतौ व्यधायि ॥ ६५ ॥

विद्यामय्यरुणसरोजपादकूज-
न्मञ्जीरश्रुतिसुभगस्वनादिविद्याम् ।
निर्निद्रो वटुरिव ते सुशिक्षमाणो
नेदिष्ठो ह्यहमभवं स्थितोऽपि दूरे ॥ ६६ ॥

त्वद्वाणीममृतमयीं सदैव शृण्व-
न्नारामे शुकमधुरस्वनं यथाम्ब ।
भूभागानचरमनूनशाखिनोऽहं
मातुर्वागनुसरणं हि नित्यतृप्त्यै ॥ ६७ ॥

सद्धंसत्रिदशपतिर्जनन्युदार-
स्त्वत्पादाङ्गदगदिताद्दिवाक्प्रभावम् ।
चक्षाणः पदगतिसारतत्त्वदर्शी
पूर्णायास्तटभुवि राजते महात्मा ॥ ६८ ॥

आ कर्णाटकनगरादतिप्रसिद्धा-
दा वञ्चिक्षितिपपुरादनन्तधाम्नः ।
न क्वापि प्रतिहतिरस्ति धर्मसेवोः
सिद्धस्ते विधिवनिते परः प्रभावः ॥ ६९ ॥

गैर्वाणी विलसतु भालतेव वाणी
मातस्ते परकृपया समृद्धवर्णा ।
आचूडं फलबहुला सुवासनाढ्या
तापघ्नी रसभरिता सुरूढमूला ॥ ७० ॥

वाग्देवीपरकरुणारसाब्धिमग्न-
स्तद्देशात्कथमपि निर्गतो गुरोः सः ।
सोत्कण्ठः समुपगतः समाधिभूमिं
तत्पूजां सह नियमैर्व्यधत्त सूक्ष्मैः ॥ ७१ ॥

विद्याशङ्करसदनं विराजमानं
विद्याभिः प्रणवपरः स चारु गत्वा ।
विद्यारण्यमुनिसमानमन्त्रसिद्धि-
र्विस्रब्धः प्रणतिमधात्सदण्डहस्तः ॥ ७२ ॥

सौवर्णाम्बरसहितं सुवर्णपात्रे
सौभाग्यप्रचयमिवोपहारवारम् ।
सत्कारं प्रमदभृताः समर्प्य पौराः
स्वीचक्रुः शिववसतिं गुरोः कृपां ते ॥ ७३ ॥

आनन्द्य प्रियवचनैः परागपूजा-
माचार्यः प्रणिपततां मुदा जनानाम् ।
आभाष्य स्मितवचनः शुभानुयोगा-
नास्थान्यां विरुदगणान्व्यसर्जयत्सः ॥ ७४ ॥

सङ्कल्पं सकलहितं विधाय सत्यं
स्वच्छन्दं क्षितिमुचितामटन्महेच्छः ।
संबोध्य स्तुतिवचनैः स शारदां त-
त्स्वीचक्रे स्वगुरुवनं पदा चरन्सः ॥ ७५ ॥

मित्रश्रीर्मितवचनो मितानुयायी
मीनश्रीविसरशुभामतीत्य तुङ्गाम् ।
मुक्तिश्रीमुकुरगृहं नृसिंहमूर्ते-
र्मूर्धासावुपदिशतां वनं प्रपेदे ॥ ७६ ॥

तन्मध्ये हृदयसमं तपोऽधिवासं
सत्वस्थं शुभमुटजं रजोविहीनम् ।
आनन्दप्रसृमरदृष्टिपातपूतं
स श्रीमानलमकरोच्चतुर्मुखाभः ॥ ७७ ॥

आप्राचीमुखमुन्मिषच्छुभदृशः संह्लादयन्प्राणिनः
सत्कर्मण्यपि चोदयन्विगलयन्नज्ञानमाशाः शुभाः ।
विच्छिन्नाः परिदर्शयन्निव रविर्मध्येऽम्बरं भासुरः
पूर्णो भाभिरयं गुरुर्विजयते संसेव्यमानोऽखिलैः ॥७८॥

शृङ्गाद्रेरयसंचयादभिनवो निर्गत्य शंयुर्गुरु-
र्लोकानां प्रतिवासरं शुभकृते रात्रिंदिवं संचरन् ।
पूर्णानन्दतटे शिवं च कलयन्मूर्तं गुरुं विद्यया
स्वस्थानं समुपेत्य निर्गुणपरो निःसीममानन्दति ॥७९॥

अटव्येषा धत्ते द्विजमृदुरवैः स्वागतिकतां
तरङ्गैस्तुङ्गायाः शुचि वितनुते पाद्यमुदकम् ।
गुरोः पादेऽनर्घं फलमविकलं स्वादु कुरुते
प्रसूनैः संफुल्लैः सह सकुतुका विस्मितमनाः ॥८० ॥

गुरुस्तुङ्गातोयं मधुरसुरभि शैवालरहितं
वगाह्यासित्वायं शुचिमृदुलदेशे शुभनिधिः ।
जपित्वा हंसाख्यं मनुमखिलमूलं परिणते
दिने पूजासक्तो जयति विधुचूडस्य महितः ॥ ८१ ॥

अहो भावोऽनन्यः परमपुरुषे स्वामिनि गुरो-
रहो दुःसाधानां परिणतिरनन्ता च तपसाम् ।
न चेदेतद्यात्रा क्व च बहुजनासङ्गबहुला
सदैवैकाकारा क्व च विजनवासैकरसिता ॥ ८२ ॥

इति स्वैरं गीतं महितमनुशृण्वन्नपि गुरुः
सुखासीनः स्तोत्राण्यभिनवभवान्याशु रचयन् ।
मुदा नेत्राम्भोजाद्दरविकसितादश्रु गलय-
न्नुदञ्चद्रोमाञ्चः कविरिव पुराणो व्यजयत॥८३॥

इति श्रीनृसिंहभारतीविजये द्वितीये भागे
पञ्चमः सर्गः ॥

---

## षष्ठः सर्गः ।

स इत्थमाराध्य वृषाचले गुरुं
सरस्वतीं चागमतत्त्वसारवित् ।
समृद्धमद्रिं तपसा च सिद्धिभिः
समेत्य शृङ्गं मुमुदे मुदाकरम् ॥ १ ॥

कवीञ्जयन्मञ्जुलवाग्विभूतिभि-
र्यतीञ्छमाद्यैरतिमोददायिभिः ।
गुरुः स पूज्यान्कुशलैरनुग्रहै-
रनुस्मरन्नक्षरमास्त गह्वरम् ॥ २ ॥

दृढव्रतो वैदिकधर्मगोपने
स भारतीवंशविवृद्धिकारणम् ।
विचिन्तयन् शिष्यपरिग्रहं परं
परं निदध्यौ हिमभानुशेखरम् ॥ ३ ॥

शिवं यमध्यग्नि यजन्ति याज्ञिकाः
सवैः समर्चन्त्यधिभास्करं स्तवैः ।
बुधाश्च पश्यन्त्यधिहृद्यमीश्वरं
स एव जागर्ति विनेयसंग्रहे ॥ ४ ॥

शिवादृते किं परमस्ति दैवतं
स एव साक्षाद्भगवाञ्जगद्गुरुः ।
निधिः श्रुतीनामपि धर्मपालक-
स्तनोति विद्याकुलसंपदं स तत् ॥ ५ ॥

महर्षिभिः स्वःस्थितनारदादिभिः
पितामहाद्यैरमरैश्च योऽर्थितः ।
शिवादिशब्दात्प्रथमं गुरोर्मुनेः
शिवः पृथिव्यामुदगाद्ध सर्ववित् ॥ ६ ॥

वटद्रुमूलस्थितदक्षिणामुखं
प्रबोधिचिन्मुद्रितहस्तपङ्कजम् ।
अनादिमायावरणापहं परं
महोऽर्चयन्लोकगुरू रराज यः ॥ ७ ॥

रमेशपूर्वान्नवदेशिकान्मुनी-
ननन्यरूपानपि पूजयन्मुदा ।
चिरं सदाचारमनुप्रबोधयन्
जनान्य आसीद्भुवि साम्प्रदायिकम् ॥ ८ ॥

गुरुः स विद्याद्यधिराजदेहज-
द्विजाधिराजात्मजभावमाप्तवान् ।
निरस्य दुष्टान् भुवि मानवादृतान्
पथः शुभं स्थानचतुष्टयं व्यधात् ॥ ९ ॥

समस्तधर्मावनदर्शनोचित-
प्रवृत्तिसंपत्समवायशोभिषु ।
मठेषु तुङ्गोदकशीकराञ्चिते
शिलोच्चयेऽस्मिन्प्रथमोऽस्ति तेषु हि ॥ १० ॥

ततोऽत्र सद्देशिकराजशङ्कर-
प्रदत्तसच्छासनरत्नशेखरः ।
सुरेश्वरो वार्तिककृत्प्रशासिता
धुरं समस्तां बिभरांबभूव च ॥ ११ ॥

घनोत्तरो बोधगुरुस्ततोऽभव-
द्धनोत्तरो ज्ञानगुरुर्गुरुर्मतौ ।
बभूव च ज्ञानपदादिरुत्तमः
पदेऽथ च ज्ञानगिरिर्गिरिर्धृतौ ॥ १२ ॥

अथोदभूत्सिंहगिरिश्च केसरी
विभेदवादीभविभेदने पटुः ।
कराम्बुजातादुदगादथेश्वरो
गुरुश्च तीर्थोऽस्य शुचिर्यतीश्वरः ॥ १३ ॥

नृसिंहनाम्ना गुरुणाधिदैवते
पदे गिरामद्भुतभूषणायितम् ।
ततश्च विद्यादिपदेन धीमता
व्यभासि तीर्थेन विशुद्धिदायिना ॥ १४ ॥

स्मरन्यमाकाशनदीनिमज्जनं
नरश्च विद्यातटिनीनिषेवणम् ।
समृच्छते तीर्थपदान्तिमोऽभव-
द्गुरुश्च नित्यप्रयतोऽथ भारती ॥ १५ ॥

अरण्यनाम्ना गुरुणा मुदासितं
पदेऽत्र विद्यादिपदेन तेन वै ।
भवाटवीमत्पदवीप्रदर्शिनीः
श्रुतीर्मुनिर्यो व्यवृणोन्महामतिः ॥ १६ ॥

समस्ततापाद्यपनोदनक्षमो
रराज पीठेऽथ च चन्द्रशेखरः ।
गुरुर्द्विधापाटितदुर्मताशय
स्ततोऽत्र मौनी हि नृसिंहभारती ॥ १७ ॥

ततश्च पीठ्यां पुरुषोत्तमो हरिः
क्षराक्षरातीतपदप्रतिष्ठितः ।
नृपालमौलिद्युतिदायिशासनो
बुधाग्रणीरत्र च शङ्करोऽभवत् ॥ १८ ॥

विधूतविश्वेतरतामसो गुरु-
स्तमन्वभादत्र च चन्द्रशेखरः ।
नृसिंहतीर्थो यतिराट् ततो गुरुः
परिष्करोति स्म च तं शुभैर्गुणैः ॥ १९ ॥

विभासयन्पूर्णमनन्तमच्युतं
पदेऽरजस्के पुरुषोत्तमस्ततः ।
चिदेकतानात्मसुखे रतो यति-
स्ततोऽत्र चन्द्रोत्तररामसद्गुरुः ॥ २० ॥

नृसिंहपूजासुखसारतृप्तिमां-
स्ततो बभासे यतिनारसिंहकः ।
पुरस्थितस्यास्य गुरोः समाभिधः
स्मरारिनिर्वर्णनतृप्तमानसः ॥ २१ ॥

ततोऽभवत्तत्र नृसिंहभारती
पदादिवृद्धिर्नरसिंहकोऽथ च ।
सदादिरानन्दपराश्चिदन्तरो
गुरुस्ततोऽभूषयदन्वहं मठम् ॥ २२ ॥

प्रपूर्वनामाथ गुरुस्ततोऽभवत्
ततश्च योगी तदनन्तरो गुरुः ।
नवश्च पूर्वस्य समोऽभिधानत-
स्ततो व्यराजिष्ट नृसिंहभारती ॥ २३ ॥

ततश्च सच्चित्सुखयोगिभारती
सदात्मनिष्ठो विधुरागमोदधेः ।
स एव पूर्वाभिनवो महानयं
बभूव विद्यासनभूषणायितः ॥ २४ ॥

नृसिंहदेवोऽथ नृसिंहपूजको
दुरात्मपुंनिग्रहशक्तिभासुरः ।
समाश्रितानुग्रहकारिलोचनो
गुरुर्बभूव प्रथमस्तपस्विनाम् ॥ २५ ॥

बभूवुरेते परमेश्वरांशिनो
विकारिणां कारणतो भिदास्ति किम् ।
अकार्यविच्छिन्नपरम्परा गुरो-
र्महात्मभिर्योगिभिरेवमद्भुता ॥ २६ ॥

स एव भूयो वितनोति भारती-
कुलाभिवृद्धिं तरुणेन्दुशेखरः ।
षडाननेभाननवीक्षणस्रव-
त्पयःस्तनोमेक्षणमोदनिर्भरः ॥ २७ ॥

इति स्मरन् शङ्करपूर्वकान्गुरून्
कुलाभिवृद्ध्यै विहितादरो यमी ।
विचक्षणं कृत्यविधौ प्रियं बुधं
क्रमादवोचत्प्रकृतं विचिन्तितम् ॥ २८ ॥

प्रशस्तविद्यालयकार्यनिर्मितिः
समस्ति कल्याणपुरे चिकीर्षिता ।
विशिष्टमेतत्करणीयमादिमं
महो हि विद्याखिलदर्शनेहितम् ॥ २९ ॥

इदं मतं राजति दीर्घदर्शिनां
वयस्विनां सर्वहितानुशासिनाम् ।
जटायुषः पूर्वभवः सुसूक्ष्मदृ-
ग्विदेहकन्यां प्रथमं ददर्श हि ॥ ३० ॥

अदःकृते पञ्चसहस्ररूपिका
नियोजनीया नियतायसंश्रिताः ।
इह स्थितानामपि रक्षणं यथा
तथा विचिन्त्यं भवता मनीषया ॥ ३१ ॥

विधिप्रियास्थानममर्त्यभूरुहः
फलत्यभिज्ञोद्यमसारमेदुरः ।
ततो विधत्स्वाभिमतोद्यमं धिया
द्रुतं प्रतिष्ठस्व च कार्यसिद्धये ॥ ३२ ॥

अवर्णनिर्मुक्तसुलब्धवर्णिता
सती विशिष्टश्रुतिरत्नमण्डिता ।
चिरन्तनी सत्पथकान्तिदायिनी
विभातु विद्यावसतिः स्वरक्षिता ॥ ३३ ॥

उपक्रमस्व द्रुतमार्यनान्दितं
विहारिविद्याध्ययनं महत्प्रियम् ।
शुभं हि कुर्वन्ति लघु स्थिरेक्षणा
विलम्बितं भूदिह मा विचक्षण ॥ ३४ ॥

विरोधिकृद्वर्षमहोत्सवो गुरो-
र्भविष्यति श्रीमति माधवे प्रियः ।
दिने शुभे मङ्गलपत्तने नवो
निधिः कलानां समुदेतु तन्मुदे ॥ ३५ ॥

त्रिविष्टपाचार्यनिदेशपालना
स्मृतिश्च तस्याखिललोकपावनी ।
भवेन्महत्यारविचन्द्रतारकं
तदेतदास्तां समयेऽतिशोभने ॥ ३६ ॥

उपक्रमेऽष्टौ वटवो यथावसु
स्युरुत्तमौ द्वौ भवतां तथाविधौ ।
तदाविरस्त्वध्ययनं चिरंतनं
विशिष्य पूर्वोत्तरयोश्च तन्त्रयोः ॥ ३७ ॥

इमौ विभागौ समये शुभोच्चये
प्रियौ नियम्यौ श्रुतितत्त्वबोधिनौ ।
अदृष्टसाक्षात्कृतिमातनोति हि
श्रुतिश्च विद्वत्प्रतिपादिताशया ॥ ३८ ॥

सुधीरधीतश्रुतिकः सुवृत्तिको
गृहीतविद्यः प्रथमाद्गुरोर्वशी ।
कुलोद्भवो व्याकृतिपाटवान्वितः
क्षमाधनो यः प्रभवेत्स शिक्षकः ॥ ३९ ॥

इह स्थितौ द्वौ कुलशीलशालिना-
वधीतिनावप्युभयोश्च तन्त्रयोः ।
सुशिक्षितौ शान्तिविनीतिशालिनौ
पदं लभेतामुपदेशनोचितम् ॥ ४० ॥

कुमारपर्यायबुधो[1] नयान्वितः
प्रतिष्ठितः श्रीलघुचन्द्रिकादिषु ।
कुमारिलाद्युक्तिषु विश्रुतः सुधी-
भिषग्वराख्यो[2] भवतामुभाविह ॥ ४१ ॥

उभाविमौ शिक्षितवेदमस्तका-
वितो बुधौ सांप्रतमेवमेव तत् ।
इदं वटूनामिह मातृकायितं
विधेर्गृहिण्याः करुणा फलेदिति ॥ ४२ ॥

तदारभस्वानघवासरे पुरे
सह त्वमाभ्यां सदृशं कलोदयम् ।
तदा महेऽस्मिन्प्रथमे च नागराः
सह स्थिताः सन्तु विमृश्यकारिणः ॥ ४३ ॥

सुधांशुशीर्षा स्फटिकाक्षमालिका-
विपञ्चिकापुस्तकपद्मधारिणी ।
करेषु पुष्पाश्रितमस्तका शुभा
सुखेन पुष्णातु कलाः सरस्वती ॥ ४४ ॥

---

१. सुब्रह्मण्यः २. वैद्यनाथः ।

इति प्रभुः श्रीगुरुरात्मतत्त्ववि-
त्सभाविभूषायितरामशास्त्रिणे ।
समस्तविद्यापरिवृद्धिकारणं
प्रसादमम्बापदकुङ्कुमं ददौ ॥ ४५ ॥

सतोः सहायं द्वितयेन धीमतो-
रपि प्रकृष्टैः शकुनैश्च मङ्गलम् ।
पुरं समेत्य प्रथमान् बहुश्रुता-
न्गुरोरुदारं निजगाद शासनम् ॥ ४६ ॥

मठे विविक्ते नभसीव शाङ्करे
कलाप्रचाराभिमता गुरुप्रिया ।
सभानिमेषेक्षणमोददायिनी
कवीक्षिता चाजनि चन्द्रिकायिता ॥ ४७ ॥

समेयिवांस्तां सचिवोऽथ माधवः
प्रसिद्धपूर्णान्वयकृष्णमूर्तिना ।
गराश्यभिख्येन सभासदा तथा
प्रधानपुंभिश्च नृपालमानितैः ॥ ४८ ॥

विपश्चितस्तन्त्ररहस्यविश्रुता
विशुद्धपूर्णेन्दुसमं तदोदिताम् ।
विधिप्रियानुग्रहसारभोजिनो
विधाय गोष्ठीं विविशुर्नमःश्रुतिम् ॥ ४९ ॥

स कृष्णमूर्तिर्मतिमान्बहुश्रुतः
शिरःस्थितश्रीगुरुवाक्यभूषणः ।
ततोऽनुमत्या सुहृदां सभासदा-
मुवाह पीठीं प्रथमामभीप्सिताम् ॥ ५० ॥

अथोचिवान् श्रीश्रुतिशीलधर्मवान्
गुरोः समादेशमुमेशशासनम् ।
दृशं शुभां मङ्गलदाममानुषीं
मनःप्रभावं च मुदा शशंस सः ॥ ५१ ॥

अयं गुरुर्नूनममानुषप्रभो
महेश्वरांशः प्रथमो हि देशिकः ।
तथाहि तस्यास्य च रीतिरद्भुता
गुणेष्वशेषेषु समानवैभवा ॥ ५२ ॥

ननूच्चकर्णाटकवासवाधिक-
प्रभावभूमीधवपुण्यसंभवा ।
त्रिविष्टपश्रीजयिकान्तिवैभवा
महीसुराख्यास्ति हि पूः सदोत्सवा ॥ ५३ ॥

समस्तभूमण्डलमण्डनायिते
समस्तराज्यापघनातिशोभिते ।
पुरे विशाले क्षितिदेवभूषिताः
शुभाग्रहाराः खलु सन्ति केचन ॥ ५४ ॥

अमीषु कश्चिद्धि हलाह्वयः श्रुतो
द्विजातिनित्याहुतिपूजिताग्निकः ।
तमावसच्छ्रीनरसिंहपण्डितः
प्रसिद्धविद्याद्यधिराजसंनिभः ॥ ५५ ॥

नृसिंहनामाभवदस्य पूर्वजः
सुतः कनीयानपि रामसंज्ञितः ।
समेऽपि वेदादिषु कौशलेऽनयोः
कनीयसोऽभूदधिका तु पाण्डिती ॥ ५६ ॥

न नामधेयं परमस्य धीमतो
बभूव रामस्य समानवृत्तिकम् ।
समाः समासन्नपि तूज्ज्वला गुणा
निसर्गसिद्धाः प्रतिभादयोऽनघाः ॥ ५७

अयं यथावत्कृतवेदशिक्षणः
सुशिक्षिती काव्यकलादिषु स्फुटम् ।
कुशाग्रधीः श्रीसुनिवासपण्डिता-
द्गृहीततर्कावगमोऽसमोऽभवत् ॥ ५८ ॥

ससंप्रदायं परिनिष्ठिताद्बुधात्
गृहीतवेदान्तनयः स पप्रथे ।
यतो वितस्तार नयेऽत्र दक्षिणा
समोत्तरा च व्यवहारपाटवी ॥ ५९ ॥

कृतीर्यदीयाः शतकोटिपूर्विकाः
पठन्ति कौतूहलतो विदेशिनः ।
दिगन्तविश्रान्तयशाः सुधीरयं
ततोऽभवत्तत्पदपूर्वभासुरः ॥ ६० ॥

अनन्तराष्ट्रस्थितपण्डितश्रिया
सखीव सख्या सदृशी सुलाञ्छिता ।
मुदा यदीया प्रथते स्म वैदुषी
परस्परप्रेमयुता हि सज्जनाः ॥ ६१ ॥

य आस्त धर्माधिकृतौ कृतस्थिति-
र्नृपालसंपूजितशास्त्रनिश्चयः ।
महीसुरं भाति कलागृहं चिरा-
दिति प्रसिद्धिर्यदुपक्रमं बभौ ॥ ६२ ॥

प्रियास्य लक्ष्मीरिति सत्कुलोदिता
रराज पत्नी विहितार्थदायिनी ।
अमू सदार्याशिवगुर्वधिश्रियौ
परस्परप्रेमविवृद्धिशालिनौ ॥ ६३ ॥

अथोचितं तावधितस्थतुर्व्रतं
समस्तविद्याधरपुत्रकाम्यया ।
मुदा यथोक्तार्चनतुष्टदैवतौ
विवेकिनामीप्सितमेतदेव हि ॥ ६४ ॥

नृसिंहदेवस्य जयप्रदायिनो
महे जयन्तीदिवसे शुभावहे ।
सुतश्च लक्ष्मीनरसिंहनामको
जयाय जज्ञे महते तयोर्वरः ॥ ६५ ॥

ततश्च यज्ञोपपदः प्रियंवदः
सुतश्च नारायण इत्युदाहृतः ।
अभूच्चतुर्थाश्रमलक्षणाञ्चित-
स्ततश्च कन्या कुलहेमदीपिका ॥ ६६ ॥

ततोऽस्य पञ्चाशशरद्यदृष्टतो
बभार गर्भं सहधर्मचारिणी ।
सुधीरयं पुंसवनादिकाः क्रिया
व्यधत्त तस्यापि पुमान्भवेदिति ॥ ६७ ॥

बुधः स शिष्यैः कुशलैः समन्वितः
सिषेविषुर्नीलगलं महेश्वरम् ।
परात्परं सुन्दरमिन्दुशेखरं
गराग्रहारं प्रययौ तपःस्थिरः ॥ ६८ ॥

ततः स मध्ये शिवनाम कीर्तयन्
महामतिर्नाम सुतस्य भाविनः ।
महच्छिवस्वामिपदाश्रितं व्यधा-
त्कथाप्रसङ्गेन सतां हि सा मतिः ॥ ६९

हरिप्रियैकादशपुण्यवासरे
बुधे प्रशस्ते सरवौ घटं गते ।
गुरौ च मेषे सति मासि फाल्गुने
प्रतीक्षिते पैङ्गलनामहायने ॥ ७० ॥

चतुर्भुजर्क्षे भृगुजे झषं गते
कुजादिषु स्वर्क्षसुहृद्गतेषु च ।
झषोदये गीष्पतिवीक्षिते शुभे
भृगुप्रियेऽम्बाकरुणारसाश्रये ॥ ७१ ॥

खनिर्यथानर्घमतिप्रभं मणिं
रतिर्यथा शम्भुपदे महोच्चयम् ।
गुरुं यथार्या तनयं च शङ्करं
ततोऽस्य पत्नी सुषुवे सुतं श्रुतम् ॥ ७२ ॥

सुतेन लक्ष्मीरधिकं बभौ सती
कृतिः फलेनेव हितेन चारुणा ।
उपासनेवाभिहितेन वर्त्मना
क्षमा सुखेनेव शमादिपोषिणा ॥ ७३ ॥

अनिङ्गमाना निहिताः प्रदीपिकाः
सुतं तमारात्सुमकुङ्कुमाञ्चिताः ।
उदाहरन्नस्य यतात्मनः स्थितिं
धृतेश्च योगस्य च भाविनीं स्थितिम् ॥ ७४ ॥

ततः शिवस्वामिसुतस्य मङ्गलं
स जातकर्मादिकमातनोत्पिता ।
ततश्चकाशे नितरां स चार्भको
निकर्षणेनेव मणिः समुज्ज्वलः ॥ ७५ ॥

क्रमेण पित्रोः सदृशैर्मनोरथैः
सह प्रतीकैः प्रचिकाय सोऽर्भकः ।
कलाभिरापूर्यदले जगत्प्रियः
शरन्निशानाथ इवाधिकादृतः ॥ ७६ ॥

पितुः समीपस्थित एव सर्वदा
प्रगेतनौपासनपूजनादिषु ।
स्वयं गृहीत्वास विभूतिमङ्कयन्
तथा प्रतीकं शुशुभेऽपि शैशवे ॥ ७७ ॥

अयं प्रसन्नाननलोचनोऽर्भको
गृहागतैः साधुभिरेव बालकैः ।
प्रसूनपूजास्तवनामसुद्रणै-
र्मुदं च पित्रोर्विजहार वर्धयन् ॥ ७८ ॥

द्वयस्य पूर्तेः शरदोरयं पुरा
पितुर्वियोगेन विदूनमानसः ।
अपि प्रियेणाग्रभवेन चाम्बया
न विव्यथे नित्यमसौ सुलालितः ॥ ७९ ॥

ततः शिवस्वामिवटुः पटुर्गिरा-
मुपेयिवान्पञ्चमहायनं क्रमात् ।
गतास्य माता पतिलोकमीरितं
पतिप्रिया भर्तृपरायणा सती ॥ ८० ॥

ततः सगर्भ्यः प्रथमोऽस्य पोषणे
सदा पितृभ्यामधिकादरोऽभवत् ।
समान् स शिष्यानपि वीक्षते ह्ययं
प्रमोददृष्ट्या सुतनिर्विशेषया ॥ ८१ ॥

नृपालदिष्ट्या जनकस्य गौरवे
पदे च धर्माधिकृतौ प्रतिष्ठितः ।
सहस्रशोऽन्तेवसतश्च शिक्षयन्
यशः प्रपेदे स च निःसमं महत् ॥ ८२ ॥

अनन्तराष्ट्रस्थसदस्यवैदुषी-
प्रशस्यमानोत्तमपाण्डितीधनः ।
स च प्रशस्तं शतकोटिमण्डनं
चकार दुर्वादिदुरुक्तखण्डनम् ॥ ८३ ॥

नृपं पदं प्राप्य महीसुरप्रियं
महीसुरं यद्वदनन्यवृत्तिकम् ।
तथैव लक्ष्मीनरसिंहवाचकं
नरेषु सिंहं तमतिप्रियं बुधम् ॥ ८४ ॥

तदा स धीमान्क्रमशोऽथ पूर्वजा-
गृहीतलिप्यादिवचःक्रमो बभौ ।
विवस्वतश्चन्द्र इव द्युतीर्वहन्
सुपर्वसन्तोषसमृद्धिकारणम् ॥ ८५ ॥

स्तुवन्स्तवैश्चन्द्रकलाधरं गुरुं
प्रबुद्धनीलोत्पलकान्तिमच्युतम् ।
उमां रमामब्जभवप्रियां गिरं
स्तुवन्रराजे स सगर्भ्यसंनिधौ ॥ ८६ ॥

श्रुतप्रभावो विनयाश्रितो वशी
स चाबभौ सत्कविसूक्तिकौशले ।
कला नराणां खलु नेक्षते वयः
परं तु सा प्राक्तनपुण्यवासनाम् ॥ ८७ ॥

अथोपनिन्ये गुरुरग्रजोऽनुजं
पुरोगमो मन्त्रविदां स मन्त्रवत् ।
श्रुतिं च निन्ये तमनन्यमानसं
पलाशदण्डादृतपूतहस्तकम् ॥ ८८ ॥

शुभोपवीतः कटिबद्धमेखलः
श्रुतिं पठन्दर्भपवित्रपाणिकः ।
धृतैकवासा जितवामनप्रभो
बभौ वपुष्मानिव सोऽग्रिमाश्रमः ॥ ८९ ॥

समित्समाराधितहव्यवाहन-
स्तदुत्थभस्माञ्चितफालपट्टकः ।
श्रुतीरधीयन्गुरुभानुनिःसृताः
कलाश्च बालो ववृधे स चन्द्रमाः ॥ ९० ॥

पुराष्टमाब्दावसितेर्गुहोपमो
गुणैर्विशुद्धाचरणैश्च भूषणैः ।
विशिष्टविद्वज्जनसाधुभाषणै-
रलंकृतोऽयं शुशुभे श्रुतिप्रियः ॥ ९१ ॥

सहायमानः सहजेन कान्तिव-
त्सतीर्थ्यसंशीतिनिवारणक्षमः ।
सभां स संख्यावदधिष्ठितां गत-
स्तदीयनिर्व्याजसदाशिषं गतः ॥ ९२ ॥

स जिष्णुनीलोपलकान्तिकुन्तलो
लसल्ललाटः श्रुतिदीर्घलोचनः ।
विशालवक्षाः पृथुकम्बुकन्धरः
समोच्चनासो विलसद्धनुर्बभौ ॥ ९३ ॥

सगर्भ्यशिक्षासहजागमोल्बणो
बहिर्गतप्राण इवास्य सद्गुणः ।
नृपालसंलालितबुद्धिकौशलः
स वंशदीपः प्रससाद निश्चलः ॥ ९४ ॥

जयन्तदेवो नु पुलोमजात्मजः
कुशो लवो वा जनकात्मजासुतः ।
रमातनूजः किमु मीनकेतनः
षडाननः किं गिरिजात्मजो जयी ॥ ९५ ॥

सनत्कुमारः किमु वेदपारगो
जितारिषड्वर्गमनाः शुकोऽथवा ।
इति प्रगल्भं पुरवृद्धसुभ्रुवः
सुवासिलक्ष्मीतनयं तमूचिरे ॥ ९६ ॥

श्रिया ह्रियोक्त्या शुभमेधया वटौ
समेधमाने सति तत्र वर्णिनि ।
प्रचोदितो देवतया जगद्गुरु-
र्गिरां नृसिंहो मुनिराययौ पुरीम् ॥ ९७ ॥

समीक्षणेनैव समाधिसौख्यदं
स्थिरप्रतिज्ञं सदयेन मञ्जुना ।
यथा हरिः सद्मनि नारदं मुनिं
गुरुं च कृष्णस्तमपाचिनोत्प्रियम् ॥ ९८ ॥

ततो नृपालः सचिवोऽधिकारिणः
श्रुतौ विनीता विबुधाश्च सज्जनाः ।
जगद्गुरुं मेरुमिवाखिलोत्तरं
मुदोपचेरुः फलपुष्पपाणयः ॥ ९९ ॥

तथा च लक्ष्मीनरसिंहपण्डितः
सगर्भ्यरत्नद्युतिर्वाग्विभासुरः ।
मुदोपतस्थे सदृशैरुपायनैः
शुभप्रतीक्षं यमिनां वरं गुरुम् ॥ १०० ॥

स तैत्तिरीयोपनिषद्गतं वचः
फलं प्रचेतस्तनयस्य सद्गुरोः ।
यथा लवो रामभवः सहाग्रजः
समर्पयन्नानमदङ्घ्रिपङ्कजे ॥ १०१ ॥

कवे महोदार सुधीसहोदर
प्रशस्तरामात्मज शिष्यसेवित ।
अपि प्रशस्तेः सदृशं समेधते
नृपालसख्यस्य च सर्वगौरवम् ॥ १०२ ॥

कुशीलवौ कुशलवनामधारिणौ
यथा प्रसिद्धौ बुधरामसंभवौ ।
तथा युवां स्थो गुरुसूक्तिगौरव-
प्रचारसंरक्षणतत्परौ भृशम् ॥ १०३ ॥

यथा भवानत्र विराजते पदे
तथा कनीयानपि नित्यमङ्गले ।
समस्तभूमण्डलगौरवास्पदे
पदे विराजत्वमितात्मसौख्यदे ॥ १०४ ॥

सदाशिवेन्द्रादिमुनीन्द्रसोदरः
शमादिषट्काभरणप्रभासुरः ।
प्रभात्वनूचानतमोऽममो वशी
पदेऽरजस्के विशदो यथा शशी ॥१०५॥

इतीरयन्हस्तविभूषणादिकं
महाधनं तत्र वितीर्य शास्त्रिणे ।
कनीयसः कुङ्कुममञ्जुलाङ्गुलेः
करे न्यधत्तास्य च कुङ्कुमं गुरुः ॥ १०६ ॥

श्रिया स बालो जितपङ्कजोदरे
करे चतुर्थाश्रमचिह्नभासुरे ।
तदात्मभासेव तदीयतेजसा
रराज राजीवसुहृत्समप्रभः ॥ १०७ ॥

ततः सगर्भ्यः स च पूर्वजो बुधो
गृहीतनिर्णीततदुक्तमाशयः ।
विदन्नपि स्नेहवशोऽनुजेऽधिकं
न चाभ्युपेयाय तदीयमाशयम् ॥ १०८ ॥

जगद्गुरुः स क्षितिपादिवन्दितो
ब्रुवन्नभाषिष्ट पुनः पुनर्बुधम् ।
न मे मृषोद्यं वचनं त्वितः पुरा
ध्रुवं च जाने भवितव्यतामहम् ॥ १०९ ॥

अमुं च दाने समयं निरामयं
शिवं च दातारमशेषदायिनम् ।
स्वमप्ययं ते सहजोऽपि सुस्वरो
ब्रवीति पृष्टः खलु देयमुत्तमम् ॥ ११० ॥

धुरं वहात्र क्षितिपालकाद्दतां
वहत्वयं तां गुरुशङ्कराद्दताम् ।
नृपस्य वाणी भवितव्यताश्रिता
गिरां च देवीति समूचिवान् स तम् ॥ १११ ॥

ततो यथावद्धृतपश्चिमाश्रमः
समातनोद्यत्स्वयमत्र निर्ममः ।
तदद्भुतं श्रीयुतकण्ठकोविदः
सुवेद सर्वं मतिमान्सहास्थितः ॥ ११२ ॥

महाकविस्तच्चरितं सविस्तरं
स एव सम्यग्गदितुं समीहते ।
बबन्ध रामस्य चरित्रमालिकां
कविर्हि वाल्मीकिरनुक्रमेण ॥ ११३ ॥

क्व बालभावः सुखभोगतत्परः
क्व वीतरागोचित एष आश्रमः ।
विधातृजायाकृपयानपायया
ननूदितोऽयं खलु शङ्करो नवः ॥ ११४ ॥

अपीह सर्वे गुरवश्च लेभिरे
पवित्रवृत्ताः प्रथमाच्च मौनिताम् ।
तथापि वर्षे नवमेऽप्ययं गुरो-
र्व्यनक्ति साम्यं प्रथमस्य विस्मितम् ॥ ११५ ॥

गुरुप्रसादो मिहिरः प्रकाशते
विभाति धन्या वसुधानुपप्लवा ।
पथे ह्ययन्ते भृशमुत्पथाज्जना
निरन्तरायं महतां हि चिन्तितम् ॥ ११६ ॥

महीयते तद्गुणपुष्पमञ्जरी
श्रवःसु पुंसां शुभवासनाप्रदा ।
स कृष्णमूर्तिः सखिभिः सहादरा-
दितीरयामास सगद्गदं वचः ॥ ११७ ॥

विरोधिकृन्माधवशुक्लपञ्चमी-
दिने यथावत्कृतमङ्गलोच्चयम् ।
गुरूक्तविद्याद्वयमाविराबभौ
यशःपताकायितशङ्करालये ॥ ११८ ॥

अथ स गुरुराड्विद्यावृद्ध्यै वसिष्ठसमो मठे
पुनरुपगताद्ग्रामात्सर्वं यथावदनुष्ठितम् ।
पुरजनकृतां श्रद्धाभक्तिं निशम्य स पिप्रिये
क्षितिशुभकृते योगीन्द्राणामिदं हि विचेष्टितम् ११९

वृष्टिं धत्तां क्षितिसुरहुताराधितो जम्भभेदी
क्षोणी सूतां विधिसमुचितं सस्यमाराधनाय।
वाणी दुग्धां समधिकरुचिं धर्मकृत्याय पुंसां
कंचिद्वीरं सपदि लभतां दक्षिणाम्नायपीठी ॥१२०॥

इति जगदनुकूलः शङ्कराचार्यतुल्यो
व्रतपरिकृशदेहः सद्गुरुः शृङ्गशैले।
शुचिमभिमतशिष्यं तत्र पीठेऽभिषेक्तुं
गिरिशमनिशमम्बां चार्चयन्नास्त तुष्टः ॥१२१॥

इति श्रीनृसिंहभारतीविजये द्वितीये भागे
षष्ठः सर्गः।

---

## सप्तमः सर्गः ।

निर्मायैवं भूतधात्रीपताकां
विद्याशालां सर्वविद्याखनिं ताम् ।
धन्यं शिष्यं सर्वशास्त्रप्रवीणं
योगीन्द्रः स प्रार्थयामास देवीम् ॥ १ ॥

अष्टौ शिष्याः सत्कुलाः साधुशीला
लब्धोन्मेषाः पाणिनीयादितन्त्रे ।
अभ्याजग्मुः सर्वविद्याविलास-
श्रीसंजुष्टां श्रीदिगीशाज्ञयैव ॥ २ ॥

आशैवैशी शास्त्रसाराधिवासं
कंचिद्दृष्टं दर्शयेद्वानुकल्पम् ।
पीठीयं यं मण्डयन्ती निकामं
शोभेतेति श्रीगुरुर्निश्चिकाय ॥ ३ ॥

यात्रा वृत्ता शारदायाः प्रसादा-
न्निष्प्रत्यूहं सर्वलोकानुकूला ।
शिष्यस्तोमा बोधिताः स्वस्वधर्मान्
जन्मक्षेत्रे देशिकेन्द्रश्च भाति ॥ ४ ॥

भव्यक्षेत्रे पत्तने प्रौढविद्या-
वृद्ध्यै नूत्ना पाठशाला न्ययोजि ।
किं वा भूयो धर्मवृद्ध्यै विरच्यं
कृत्ये तस्मिन् शङ्करो बोभवीतु ॥ ५ ॥

तुङ्गास्रोतोनिर्झरासारपूते
श्रीशृङ्गाद्रेः सानुनि प्राप्तकामः ।
योगी स श्रीशङ्करं सांख्यनिष्ठो
ध्यायन्नासीत्सद्विनेयोपलब्ध्यै ॥ ६ ॥

कश्चिद्योगी त्यक्ष्यति क्षोणिमेतां
निर्मर्यादां देवकीनन्दनाभः ।
इत्याशासु श्रेष्ठमौहूर्तिकोक्तिः
काचिज्जज्ञे दुर्निमित्तैस्तदानीम् ॥ ७ ॥

नैतावन्तं कालमासीत्पवित्रे
यत्र क्षेत्रे वीतिहोत्रादिबाधा ।
श्रीवाग्देवीदिव्यसौधं च वह्नि-
स्तत्राकस्माद्भस्मसादाततान ॥ ८ ॥

अध्यासीना रेजुरग्न्यं वरेण्यं
यद्धि क्षेत्रं द्वन्द्वबाधाविमुक्ताः ।
त्रेता हव्यं जुह्वतामाददाना
मातेवासीद्यत्र तुष्टा स्पृशन्ती ॥ ९ ॥

यस्यां भूमौ शुद्धवंशप्रसूताः
षट्कर्माणो मार्गनिष्ठाः परेभ्यः ।
सद्वृत्तस्था दर्शयन्ति स्म मार्गं
सन्त्यत्रैव त्यक्तवृत्तादयस्ते ॥ १० ॥

धर्मैकान्त्ये सत्तपस्यासमृद्धे
यत्र श्रेष्ठे भुञ्जते स्म द्विजाद्याः ।
काले शालिक्षीरकन्दादिभोज्यं
कल्येऽप्यस्मिन्भुञ्जते ते निषिद्धम् ॥ ११ ॥

विप्रा यस्मिन्विश्ववन्द्या विशुद्धा-
श्चेरुर्धर्मं शान्तिकं पौष्टिकं च ।
तत्र क्रय्यं हेयमादाय भोज्यं
प्रातस्तेऽपि त्यक्तशङ्का अदन्ति ॥ १२ ॥

को वा द्रष्टा कः प्रवक्ता मदंहः
को वा श्रोता शासिता वा भवेत्कः ।
इत्येषा धीर्यत्र नासीज्जनानां
तत्राप्यास्ते पापकर्मप्रसङ्गः ॥ १३ ॥

नामादेशं यज्वनां यत्र दत्तै-
र्ग्रामैः पूर्णो हव्यकव्यादियोग्यैः ।
गेहैर्दृश्यैर्दुष्प्रवेशोऽन्यपुंसा-
मन्याक्रान्तः पांसुलः सोऽस्ति शोच्यः ॥१४॥

अर्को वृक्षश्चन्दनाद्रिं यथोच्चं
पुष्पोद्यानं क्ष्वेलशाखीव पूज्यम् ।
व्याघ्रो गोष्ठं धेनुपूर्णं यथैतं
दुष्टो ग्रामं शिष्टजुष्टं समेति ॥ १५ ॥

एवंभूताधर्मलिङ्गानि भूयो
जायन्तेऽस्मिन्क्लेशसंसूचकानि ।
यन्मर्यादाव्युत्क्रमं प्राहुरार्याः
स्वैरं लोकाभव्यहेतुं क्रमेण ॥ १६ ॥

धर्मो यस्मिन्पूर्णपादो न्युवास
क्षेत्रे वेदैस्तत्परैस्तत्फलैश्च ।
तस्मिन्नेवाधर्मचर्यां प्रसक्तां
विद्वान्ब्रूते धर्मगोप्तुर्वियोगम् ॥ १७ ॥

ईतित्यक्तं शास्त्रधर्मादिसस्यं
श्रीवाग्देवीसत्कृपासारपुष्टम् ।
तिष्यानीताधर्मचर्येतिरेवं
शृङ्गक्षेत्रं बाधते सत्फलाढ्यम् ॥ १८ ॥

वेदस्वान्तो वेदजिह्वो विशुद्धः
स स्वामीशो वेदविश्रान्तकर्णः ।
वेदान्तार्थध्याननिष्ठोऽप्यधर्म्यां
योगी वार्तां तत्र शुश्राव दुष्टाम् ॥ १९ ॥

अप्युद्विग्नस्तादृशेर्नांहसायं
ध्यानासक्तः कालहन्तुः शिवस्य ।
प्रत्यादेष्टुं दुष्टकालातिपातं
धृत्योदास्त प्राप्तकालाभिनन्दी ॥ २० ॥

कोणेऽप्यस्मिन्ब्रह्मलोकातिसत्त्वे
धर्मज्ञानावासभूमावियं स्यात् ।
रीतिस्तिष्यः कुत्र वा स्वे महत्त्वे
स्थातुं नेच्छेत्स्वाधिकाराधिरूढः ॥ २१ ॥

एवं स्वस्थस्यापि तस्याधिनेतुः
काले कालेऽपाक्षयद्धर्म किंचित् ।
नूनं देहे पञ्चभूतात्मकेऽस्मि-
न्नुत्पत्त्याद्याः सन्ति सर्वे विकाराः ॥ २२ ॥

तस्योत्साहो ब्रह्मनिष्ठस्य मध्ये
मध्ये किंचिच्छृण्वतः किल्विषं तत् ।
संतोषोऽपि स्वस्थतोत्थस्तदानीं
संजहास म्लायता विग्रहेण ॥ २३ ॥

अभ्यर्णस्थान्पुस्तकन्यस्तहस्ता-
न्स्वामी च्छात्रान्पादबद्धप्रणामान् ।
सद्वात्सल्योऽप्यात्मशास्त्रं पवित्रं
ह्रस्वोत्साहः पाठयामास नैव ॥ २४ ॥

लघ्वाद्यां किं चन्द्रिकां पाठयेयं
किं वा स्वस्थोऽसत्प्रपञ्चं त्यजेयम् ।
स्वप्ने देवि ब्रूहि कोऽयं किमत्र
स्वान्तं मेऽस्मिन्नम्ब दोलायमानम् ॥ २५ ॥

गुर्वध्यक्षो व्युत्क्रमे धर्मसेतोः
स्तोत्रैरम्बां स्वागतैः स्वादुवाक्यैः ।
इत्थं नित्यं नाथमानोऽन्तिकस्था-
ञ्छिष्यांस्तेने किंचिदुद्विग्नचित्तान् ॥ २६ ॥

श्रीकण्ठाद्या नित्यमन्तेवसन्त-
स्तं पश्यन्तो मम्लुरुद्विग्नचित्ताः ।
जह्नुः कृत्यं नैव किंचिन्न चक्रुः
साध्योपायं किंतु तस्तम्भुरेव ॥ २७ ॥

संदर्भेऽस्मिन् शारदास्थानभारं
प्राप्तं पूर्वात्सद्विनेये समर्प्य ।
भद्रं शक्ते कुत्रचिद्ध्यानयोग्ये
स्थित्वाचार्यः स्वस्थतां सोऽन्वियेष ॥ २८ ॥

काले काले स्वेन निर्णीतपूर्वं
धीरं सिंहं शास्त्रिणं श्रीनरादिम् ।
पीठे कर्तुं निश्चिकायाथ योगी
प्राज्ञप्रज्ञा निर्मलादर्शकल्पा ॥ २९ ॥

ब्रह्मावासो भद्रपीठः स भूम्या-
मार्चार्याश्चाप्यब्जजाताः प्रशस्ताः ।
तेषां बुद्धिः शारदाम्नायभूता
सूते काले सापि शिष्यं तदर्हम् ॥ ३० ॥

जानात्वेतां कृष्णराजः प्रवृत्तिं
स ह्याप्तोऽस्मिन्सर्वकृत्यप्रवीणः ।
तं चोद्दिष्टं शास्त्रिणं रामशास्त्री
क्षोणीपालं प्रापयत्वेष दक्षः ॥ ३१ ॥

कालेऽत्रासीत्सोऽपि धीमान्विपश्चि-
त्प्रौढा विद्याः शिक्षमाणोऽर्थवत्ताम् ।
तन्वन् शान्तो भारतप्रौढविद्या-
शालायाः श्रीपत्तने मङ्गलाख्ये ॥ ३२ ॥

तस्यादेशात्पत्तनं रामशास्त्री
प्रापद्यावत्तावदत्रास्त भूपः ।
अव्याक्षेपः सिद्धमर्थं ब्रवीति
प्राज्ञाशास्तिः सर्वसिद्धिं च सूते ॥ ३३ ॥

गुर्वाज्ञप्तिं कर्णभूषायमाणा-
माचख्यौ स श्रीविशालं नृपालम् ।
निर्णीतार्थः सोऽपि तां चानुमेने
तन्निर्णीते ह्यपरो नैव तस्य ॥ ३४ ॥

आक्रान्तः स क्लेशजातेन भूपो
ज्ञाताचार्यग्लानिरेतत्प्रवृत्तौ ।
जातौत्सुक्यः श्रीमते देशिकाय
स्वस्योद्योगं संदिदेशामुनैव ॥ ३५ ॥

त्यक्तासूयादम्भकामादिदोषः
कृत्याभिज्ञः सर्वनिर्वाहशीलः ।
भूपश्रेणीमौलिसंलालितोक्तिः
स क्ष्मापालो राजचूडामणिर्हि ॥ ३६ ॥

रोगातीतज्ञानिनो योगिराजः
काये कासः प्रावृतद्दुर्निरासः ।
वर्षस्तस्मिंस्तस्य वैराधिकृत्यं
युक्तो लेभे माघशुक्लच्छदेन ॥ ३७ ॥

रुक्सप्तम्यामेधमानच्छदे सा
प्रादुर्भूता श्रान्तचर्यप्यशान्ता ।
आचार्येऽस्मिन्सर्वकारुण्यभूमौ
काले तस्मिन्नित्यमेधांबभूव ॥ ३८ ॥

सोऽप्याचार्यः फाल्गुने मासि कृत्यं
धर्म्यं नित्यं तत्तदस्मिन्विधाय ।
तुङ्गातीरे स्वर्गगङ्गातटाभे
स्नातायातश्चाक्षमे नैव गन्तुम् ॥ ३९ ॥

धीरस्तन्वामुन्नतांसोऽपि योगी
स्वाङ्गं क्षिप्रं नोन्नतं संविधातुम् ।
ग्लानोऽत्यर्थं शैत्यसंजातकम्पः
शक्तोऽह्नाय प्राभवत्तत्र तीरे ॥ ४० ॥

तर्ह्यन्वेष्यो रोगहारिप्रवीणो
नाम्ना चायादच्युतो राजकीयः ।
भैषज्यज्ञो दृष्टनिर्णीतरोग-
श्चाचार्यस्य प्रागभूद्यः सुमेधाः ॥ ४१ ॥

तद्भैषज्याच्छास्त्रदृष्टात्तदात्वे
प्रोल्लाघत्वं श्रीगुरोः प्राप देहः ।
कासः कामं नैव शान्तो दुरात्मा
नात्यारूढा निग्रहं ह्याप्नुवन्ति ॥ ४२ ॥

तस्यालोच्य प्रक्रमं वैद्यनेता
देहे कार्श्यं वातपित्तस्थितिं च ।
प्रत्यासन्नं सिद्धिकालं चचक्षे
सिद्धासन्नो निश्चयं को न वेद ॥ ४३ ॥

रात्रौ पूजां फाल्गुने कृष्णपक्षे
कृत्वानर्घां चन्द्रमौलेः प्रमोदात् ।
स्वस्थः श्रान्तः प्राप विश्रान्तिगेहं
कासस्तस्मिन्नैव विश्रान्तिमाप ॥ ४४ ॥

तं श्रीकण्ठस्तर्हि सिद्धं प्रसङ्गा-
त्कालं शिष्यस्वीकृतौ युक्तमूचे ।
विद्वांसं तं सोऽपि योग्याचचक्षे
शिष्यंभूष्णुं पूर्वनिर्णीतमेव ॥ ४५ ॥

आदायैतं शास्त्रिणं शासनं च
क्ष्मापालस्य क्षिप्रमागन्तुमत्र ।
पत्र्यास्थानीशास्त्रिणे विस्तरेण
प्रेष्येत्येवं सोऽन्वशात्स्वप्रधानम् ॥ ४६ ॥

अन्तर्न्यस्तज्ज्ञेयसंदर्भवृत्तं
लेखं श्रीमद्देशिकादेशकाळम् ।
क्षिप्रं ज्ञेयं तत्र सर्वाधिकारी
हस्ते देयं शास्त्रिणे प्राहिणोच्च ॥ ४७ ॥

आस्थानीस्थो लेखमादाय भव्य-
स्थानीयस्थप्राज्ञरामाय दातुम् ।
आचार्यस्य च्छन्दसंदर्शकं तं
कश्चिद्विद्वान्प्रास्थिताशु प्रवीणः ॥ ४८ ॥

स श्रीकण्ठः फाल्गुने मासि दर्शे
संप्राप्य श्रीस्वामिनः संनिधानम् ।
पूर्वाभाषी कृत्यतन्त्रप्रवीणः
सत्याभाषी प्रश्रयेणावभाषे ॥ ४९ ॥

शास्त्री रामो नूनमेष्यत्युदग्रः
पत्रालोकज्ञातनिर्धारितार्थः ।
किंतु छिन्ना वासराः संभवेयुः
श्रद्धाभक्तीसत्वरस्यापि मार्गे ॥ ५० ॥

यद्याशास्ते श्रीगुरुस्तत्र पूर्वं
कर्तुं शिष्यस्वीकृतिं प्राप्तकाले ।
निर्देष्टव्यः कश्चिदभ्यर्णवर्ती
शिष्यः स्याच्चेदञ्जसानुष्ठितं तत् ॥ ५१ ॥

एवं तस्मिन्भाषमाणे प्रवीणे
वाक्यं चैतत्सद्गुरुः प्रत्यवोचत् ।
साधीयांसं वीक्षसे त्वं यमत्र
कंचिच्छान्तं वर्णिनं निर्दिशेति ॥ ५२ ॥

वीणाहस्ताध्यानविज्ञाततत्त्वौ
निर्दिष्टेषु श्रीगुरुस्तेन तेषु ।
एको मन्दो न प्रवीणो न विद्वान्
विद्यास्थानं कोविदेनैव भूष्यम् ॥ ५३ ॥

पुंसां वन्द्या दक्षिणाम्नायपीठी
पूता पूतं प्रेक्षते कंचिदेव ।
त्वन्निर्दिष्टो नास्ति तादृक्पवित्र-
स्तस्मादेषा धर्मशाला विनास्ताम् ॥ ५४ ॥

एवं द्वावप्येष योगी निरस्य-
न्नन्यस्मिन्स्वां मौनितां संप्रपेदे ।
प्राङ्निर्णीतं रामशास्त्री पवित्रं
विद्यावन्तं युक्तमानेष्यतीह ॥ ५५ ॥

इत्युक्त्वाऽमावात्मविद्याविलासं
पाठ्ये गेये संप्रमोदाधिवासम् ।
स्वात्मावासः श्रोतुकामो बभूव
ज्ञा ह्याहुस्तं निश्चलाध्यात्मदीपम् ॥ ५६ ॥

स श्रीकण्ठो जाततत्त्वावमर्श-
श्छायाभूतो निर्णयज्ञोऽस्य सद्यः ।
वेदं वेदं छन्दमन्यादृशं तं
मेघध्वानः संजगौ तं विलासम् ॥ ५७ ॥

गीतं शृण्वन्नात्मविद्याविलासं
स ब्रह्मेन्द्रं मानसे हंसराजम् ।
ध्यायन्स्वात्मानन्दसिन्धौ ममज्ज
स्वाङ्गे नेत्रे निश्चलश्चान्तरङ्गे ॥ ५८ ॥

आत्मारामोऽसौ परीतापवर्षे
चैत्रे शुक्ले वासरेऽङ्गारकस्य ।
पीठे कृष्णात्वक्परीते प्रहृष्टो
ध्याने श्रौते निश्चलः प्रातरास्त ॥ ५९ ॥

अर्धोन्मीलन्निश्चलाक्षस्तदानीं
सत्त्वोत्कृष्टः पृष्ठविन्यस्तमूर्धा ।
शुद्धानन्दालोकनिर्धूतमाया-
नीहारोऽसौ ब्रह्मवित्संबभूव ॥ ६० ॥

अभ्यर्णस्थाः प्रोचिवांसस्तदानीं
तां तां रीतिं योगिनः संदिहानाः ।
यः श्रीकण्ठश्चन्द्रमौलेस्तदानीं
पूजां कुर्वन्नास्त चिन्ताकुलाक्षः ॥ ६१ ॥

सद्यः प्राप्तस्तस्य पार्श्वे गुरोः स
स्वात्मस्थं तं चिन्तयन्नास्त तूष्णीम् ।
मोदास्वादे स प्रकामं समाधे-
र्विघ्नाशङ्कां मन्यमानोऽस्य तस्थौ ॥ ६२ ॥

उत्थायास्माच्छ्रीगुरुः स्वात्मयोगात्
पप्रच्छामुं नित्यपूजावसानम् ।
ज्ञात्वा वृत्तं सिष्मिये च प्रसन्नः
किंचिज्जातस्वेदवक्त्राम्बुजातः ॥ ६३ ॥

सस्नौ नित्यं चाचचाराह्निकादिं
स्थास्नुर्जीवन्मुक्तभावे स योगी ।
ग्लास्नुर्देहेऽप्यस्मितादिप्रमुक्तो
जिष्णुर्भिक्षाचर्यमप्याचरन्न ॥ ६४ ॥

सोऽथ ग्रामे चैत्रशुद्धद्वितीया-
युक्ते सौम्ये वासरे प्रत्युषस्यम् ।
स्नात्वा सर्वं नित्यकर्मानुतष्ठौ
किंचित्क्षीरं ह्यादद्दावर्थ्यमानः ॥ ६५ ॥

अध्यासीनः स्वासनं संजजाप
प्रत्यग्दृष्टिस्तत्त्वमस्यादिवाक्यम् ।
नित्यानन्दे निर्विकल्पे समाधौ
दध्यौ ध्येयं वर्तमानः स योगी ॥ ६६ ॥

स्थित्याचष्ट स्पष्टमानन्दमग्नो
गीतोक्तार्थं योगमेषोऽथ योगी ।
लेभे लाभं स्वं परं च स्ववेद्यं
यस्मिन्लाभे सर्व एवान्तरस्ति ॥ ६७ ॥

तस्मिन्योगी जागरामास नित्ये
शुद्धे बुद्धे यत्र निद्रान्ति मूढाः ।
आचार्यं तं जाग्रतं ज्योतिषि स्वे
प्रापुः पौरा लोकितुं जातशङ्काः ॥ ६८ ॥

नेयं निद्रा योगिनः संनिरुद्ध-
श्वासस्यास्य स्वासने च स्थितस्य ।
नेयं मूर्च्छा स्वच्छसौम्याननेन्दो-
रित्याचख्यौ तस्य वन्द्यस्य कश्चित् ॥ ६९ ॥

नायं योगी माप्नुपेयादहश्य-
स्त्यक्ताविद्यः क्षीणकर्माशयश्च ।
सर्वज्योतिर्भासकश्चेति मध्यं
द्रष्टुं व्योम्नः प्रारुरोहार्यमाप्नुम् ॥ ७० ॥

कासो रोगः शैत्यवातादियुक्तो
जह्रासास्य स्वामिनस्तस्य देहे ।
पश्यच्छिष्यस्वान्तमोहापहारी
तद्वक्त्रेन्दौ मन्दहासः ससार ॥ ७१ ॥

तिष्ठन्योगी निर्विकल्पे समाधौ
ध्वान्तं धून्वन्देहिनां पश्यतां सः ।
सर्वव्यापिन्यात्मनि ब्रह्मरूपे
मायातीते निष्प्रपञ्चे विलिल्ये ॥ ७२ ॥

त्यक्त्वा योगी बाल्य एवाखिलं स्वं
बाल्येनासौ वर्तमानश्च पीठ्याम् ।
जित्वाऽविद्यां विद्यया ब्रह्मनिष्ठः
स्वात्मारामः प्रापदद्वैतराज्यम् ॥ ७३ ॥

नानावर्णो यश्च नामप्रपञ्चो
नानाकारो यश्च रूपप्रपञ्चः ।
नित्याद्वैते निर्विकल्पे स सर्वः
सिद्धे तस्मिन्बोधरूपे तिरोऽभात् ॥ ७४ ॥

आसीदस्मिन्पुण्यकृत्यैव सिद्धे
सर्वे जीवास्तस्य मित्राण्यभूवन् ।
प्राप्तस्यास्य श्रीगुरोर्ब्रह्मभावं
प्रापुः पुण्यं सर्व एवाश्रमेण ॥ ७५ ॥

पातुं भोक्तुं स्नातुमाचान्तुमेतुं
प्रत्याहर्तुं लोचनं स्पन्दितुं च ।
स्थातुं शुष्यल्लोचनाः शिष्यवर्गा-
स्तस्मिन्सिद्धे नैव शेकुस्तदानीम् ॥ ७६ ॥

कृत्वा कृत्यं कल्पविन्मुख्यशिष्यः
सिद्धिस्थानं दक्षिणेन प्रकल्प्य ।
ध्यानागारस्यास्य साध्वीं प्रतिष्ठां
लिङ्गस्यास्मिन्नार्मदस्यापि तेने ॥ ७७ ॥

यामिन्यां यल्लिङ्गमानर्च वन्द्यं
वर्षाण्यित्थं पञ्च विश्रान्तिकाले ।
एकान्तेऽसौ हार्दविद्याप्रवक्ता
बिल्वैः शुद्धैश्चन्द्रमौल्यर्चनान्ते ॥ ७८ ॥

तत्रान्येद्युः प्राप धर्माधिकारी
गुर्वासक्तः सत्वरः प्रोन्मनाश्च ।
साकं कृष्णस्वामिनोद्विग्नचेताः
सिंहेन श्रीशास्त्रिणा मध्यमेऽह्नि ॥ ७९ ॥

वर्णिश्रेष्ठः सर्वशास्त्रार्थनिष्ठो
नेदिष्ठश्च त्यक्तसर्वाभिमानः ।
गुर्वादेशप्राप्तसंन्यासलिङ्ग-
स्वीकारेऽसावल्पकालं दविष्ठः ॥ ८० ॥

दैवं लोके दुर्निरासं जनाना-
मित्येषा गीः सत्यभूतेति वक्तुम् ।
तत्राप्यासीद्रीतिरेषा तदानीं
रामोऽप्यासीदत्र दृष्टान्तभूतः ॥ ८१ ॥

अत्युत्कण्ठः सिद्धराजापचित्या-
माचारज्ञो बाष्पसंरुद्धकण्ठः ।
श्रीश्रीकण्ठस्तत्परेद्यव्यशेषं
वक्तुं तस्थौ प्राप्तराजोपकण्ठः ॥ ८२ ॥

गुर्वाज्ञप्तिं विंशतिं हायनानि
त्रीण्यन्यानि त्यक्ततन्द्रिर्विनिद्रः ।
भासा सर्वं निर्ममो योऽनुतिष्ठं-
स्तेने सर्वं शारदास्थानकृत्यम् ॥ ८३ ॥

गुर्वादेशं भूपमावेद्य सर्वं
शिष्टे कृत्ये लब्धराजाभ्यनुज्ञः ।
तं शृङ्गाद्रिं गीतसिद्धेन्द्रवृत्तं
तूर्णीं प्रापद्धाविकार्योत्सुकः सः ॥ ८४ ॥

आवंआवं योगिराजस्य सिद्धिं
सारंसारं तत्स्वभावप्रभावम् ।
योगीशानस्यादिदेशानुरूपां
सिद्धे राष्ट्रे कार्यरीतिं स राजा ॥ ८५ ॥

अस्मद्वंशप्राग्भवाखण्डपुण्य
त्यक्ताशङ्काशेषकार्योपदेष्टः ।
स्वर्गालभ्यश्रीकराज्यप्रदातः
सिद्धेशान श्रेष्ठ नित्यं नमस्ते ॥ ८६ ॥

त्वां वन्देऽहं सर्वदा दृश्यमानं
सत्वाधिक्यप्राप्तसार्वज्ञ्यनिष्ठ ।
दृष्टिक्षेपानन्दिताशेषशिष्य
क्षिप्राभीष्टाधायिसत्योक्तिशील ॥ ८७ ॥

श्रीव्यासर्षे श्रीशुक श्रीकुमार
श्रीशेशान श्रीवटद्रुङ्घ्रिवास ।
श्रीसिद्धेशासाध्यकृत्यप्रवीण
त्वां वन्देऽहं शङ्कराचार्यरूपम् ॥ ८८ ॥

विद्यां हृद्यां सिद्धहंसावतंस
श्रुत्यन्तोक्तां मोहहन्त्रीं परस्तात् ।
सेरालोकः कः प्रियां हस्तदत्तां
व्याचक्षीतामन्दसौहार्दवाक्यैः ॥ ८९ ॥

आज्ञावाक्यं श्रीगुरो मे किरीटं
तन्निर्वाहः सर्वरक्षा पवित्रा ।
सत्याशीस्ते सिद्धिसोपानपंक्ति-
र्लाभायास्ते मोक्षसाम्राज्यलक्ष्म्याः ॥ ९० ॥

विद्यासिन्धो भारती सूनृता ते
वाणीवास्ते मर्मनिर्माणकृत्ये ।
दोग्ध्रीं लक्ष्म्या दिव्यमूर्तिं नमस्य-
न्नासेऽहं ते मङ्गलं मे सदास्ताम् ॥ ९१ ॥

इत्थं राजा श्रद्दधानो गुरूक्तौ
सर्वं कर्तुं वेदवाचीव तिष्ठन् ।
आज्ञाधेनुं मोददुग्धप्रदोग्ध्रीं
क्षेमाकाङ्क्षी चारयामास पुष्टाम् ॥ ९२ ॥

तां भद्राज्ञां माधवो रामचन्द्रः
सर्वे चान्ये पूजयन्तोऽनुजग्मुः ।
संपूज्यां तां राजकीयाः प्रधानं
संख्यावन्तं प्रापयामासुरारात् ॥ ९३ ॥

गुर्वाशिष्टः प्राक्तनामोघपुण्य-
स्तोमो मूर्तः सिंहशाली नरादिः ।
मौनी भूत्वा दक्षिणाम्नायपीठे
स्थातुं धीरः संननाह प्रशस्ते ॥ ९४ ॥

मुख्यः शिष्यो ब्रह्मभूयं गतस्य
प्राज्ञो नित्यां योगिभिः सार्धमग्र्यैः ।
तुङ्गातीरे श्रीयुते तद्विधिज्ञैः
संस्थानार्हां संवितेने सपर्याम् ॥ ९५ ॥

आगङ्गाया आ च ताम्रापगाया-
स्तीरात्सर्वे शिष्यवर्गाः समीयुः ।
श्रेयःकामा लिप्तभस्माङ्गरागा
द्रष्टुं तुङ्गां सिद्धपूजासमाप्तिम् ॥ ९६ ॥

अद्रौ शृङ्गे विन्ध्यनीहारशैल-
प्रोत्तुङ्गे श्रीसिद्धराजस्य पूजा ।
तुङ्गातीरे सिद्धिदेशेऽधिलिङ्गं
निर्वृत्तासीत्सिद्धसाध्यर्षिवन्द्या ॥ ९७ ॥

पूर्वोद्दिष्टो वर्णिराजो नृसिंहः
श्रीश्रीविद्यां नारसिंहादिजप्यम् ।
लब्ध्वा तेजःपुञ्जकल्पं मनुज्ञा-
त्संन्यासाङ्गं श्राद्धकर्मादि चक्रे ॥ ९८ ॥

सोऽथ प्राज्ञः क्षान्तिवैराग्यपूर्णः
शुद्धस्वान्तः श्रीपरीतापिवर्षे ।
चैत्रे कृष्णे गीर्पतेरह्नि षष्ठ्यां
पारिव्राज्यं प्राप्तवान्सद्गुरूक्त्या ॥ ९९ ॥

सद्यो वन्द्यं गुर्वधिष्ठानधिष्ण्यं
गत्वा पुण्यां सद्गुरोश्चोपसत्तिम् ।
कृत्वा चान्यत्सद्गुरोर्लब्धविद्या-
द्दिक्षोर्लेभे श्रीमहावाक्यरत्नम् ॥ १०० ॥

श्रेष्ठस्तदा तत्र स चन्द्रशेखर-
श्रीभारतीति प्रथिताख्ययाऽभवत् ।
आनन्दलक्ष्मीस्थिरवासमन्दिरं
स्थानं हि तत्पुण्यसमुच्चयोद्भवम् ॥ १०१ ॥

सच्चिच्छिवश्रीनरसिंहभारती-
हस्ताब्जजन्मा यतिचन्द्रशेखरः ।
भद्रासनं विश्वबुधाभिनन्दनं
समारुरोहाश्रितलोकगौरवम् ॥ १०२ ॥

संतानादिद्रुमसुममयी सत्यसंतोषदात्री
सन्माङ्गल्यप्रथमरचनावृद्धिसंसूचयित्री ।
सर्वक्षेमप्रकटनपरस्निग्धवादित्रघोषा
सश्रीर्वृष्टिर्भ्रमरभरिता पेतुषी तत्र रेजे ॥ १०३ ॥

स्वभावाविर्भूतैर्गुरुगुणसुमस्तोमविन्यासपूर्वैः
स्वरूपाविर्भावप्रसृमररसासेकसौवर्णपर्णैः ।
स्तवैरन्यादृक्षश्रुतिवरवचोगुम्भरम्यप्रदीपैः
सरागैराचार्यान्स च नवगुरुस्तुष्टुवे भद्रपीठे १०४

सरस्वत्या वंशं शिवनवगुरुस्मेरहस्ताब्जजातः
स्वभूतानन्दोत्थस्तववरशुभध्वानसंपूर्णवक्त्रः ।
पुराजन्मायातप्रचुरसुकृतः शेखरश्चन्द्रपूर्वो
गुरुर्धीमान्वृद्धं कलयतितरामित्यवोचन्बुधौघाः ॥

समारूढे तस्मिन्गुरुसुरपतौ शेखरे चन्द्रपूर्वे
प्रशस्तश्रुत्यन्तद्युतिततिभृतां दक्षिणाम्नायपीठीम् ।
जगुश्चार्यां गीतिं स्वरलययुतां कैशिकाचार्यवर्या
ववुः स्पृश्या वाताः सुरभिमधुराः शङ्कराचार्यभूमेः ॥
॥ १०६ ॥

इति श्रीनृसिंहभारतीविजये द्वितीये भागे
सप्तमः सर्गः ।



# अष्टमः सर्गः ।

श्रीमान् समासादितभद्रविष्टरः
सच्चिच्छिवश्रीगुरुकान्तिभासुरः ।
विद्यासमाराधनमोदनिर्भरो
हंसोऽधिपोऽभूदथ चन्द्रशेखरः ॥ १ ॥

आकांक्षितत्यक्तमनाः स बुद्धिमा-
नाकस्मिकास्थानपतित्वकौशलः ।
आकर्षकः शास्त्रचयस्य नैष्ठिक-
श्चाकल्पमङ्गीकृतवान्गुरूदितम् ॥ २ ॥

आस्तिक्यधीर्यस्य पितामहः सुधी-
रास्थानविद्वानपि शारदामठे ।
आस्वादितव्याकरणोक्तिकौशल-
श्चाम्नाननिष्ठोऽभवदास्तिकोत्तमः ॥ ३ ॥

गङ्गादितीर्थाटनपूतमानसः
शान्तः कृतोपास्तिरधीतवेदकः ।
आराधितैतच्छुभपीठनिष्ठित-
प्राचीनभास्वन्नरसिंहदेशिकः ॥ ४ ॥

जन्माभवद्यस्य सुधीसुपूजिते
　　वंशे च मातापितरौ शमान्वितौ ।
जातादिसंस्कारपरम्पराभव-
　　त्क्रमेण काले विधिवत्प्रचोदिते ॥ ५ ॥

बुद्धौ गुरुर्यो विनये रघूत्तमो
　　वेदे वसिष्ठस्तपसि स्थिरो ध्रुवः ।
गम्भीरतायामुदधिर्धृतौ गिरि-
　　र्हिमालयो वाचि सुरापगाझरः ॥ ६ ॥

बाल्ये प्रणष्टाखिलसोदरोऽपि यो
　　वाण्या स्वयाशिक्षत साकमाङ्गलीम् ।
भाषां सतीर्थ्याननतिशय्य पाठिनः
　　पदं प्रपेदे प्रथमं च मानितः ॥ ७ ॥

यं लब्धवर्णं समये शुभेक्षणः
　　शास्त्रोक्तसत्याचरणोपदेशकः ।
वाग्मी गुरुः सम्यगवेत्य सद्गुणं
　　बद्धादरं संस्कृतशिक्षणेऽकरोत् ॥ ८ ॥

श्रीकण्ठशास्त्री गुरुदेवशासना-
　　त्संजीविनीं सत्यकलाभिवर्धिनीम् ।
प्रापय्य यं शिक्षितकाव्यनाटकं
　　चक्रे प्रकृष्टाधिकगौरवास्पदम् ॥ ९ ॥

काव्येषु चम्प्वादिषु नाटकादिषु
प्रावीण्यमन्यादृशमाप यो वटुः ।
कार्तस्वरस्येव सुगन्धिता परा
यस्योदिता सद्विनयादिभूष्यता ॥ १० ॥

भासा मणीनामिव मेरुरुन्नतो
मुक्ताप्रवालप्रभयेव सागरः ।
लक्ष्म्येव नक्षत्रगणस्य पुष्करं
कान्त्या गुणानामपि यो व्यराजत ॥ ११ ॥

प्रात्यब्दिकप्राश्निकतास्थितो गुरु-
र्विद्यार्थिनामुद्यमधीरताधियाम् ।
प्रोद्वीक्ष्य यस्मिन्प्रथमाङ्गुलिस्थितिं
सम्यक्कृपामातनुते स्म पुष्कलाम् ॥ १२ ॥

प्रश्नार्थविज्ञानविनिर्णयोत्तर-
प्रक्रान्तसन्दर्भविवेचनक्षमम् ।
विद्वद्वरामोदिवचःसुमोच्चयं
यं सद्गुरुर्वीक्ष्य भृशं विसिष्मिये ॥ १३ ॥

आकांक्षितार्थावगमप्रचारण-
प्रकृष्टविज्ञानमतिप्रभान्वितम् ।
यं तर्कशास्त्रावगमे न्ययूयुज-
त्संमाननेनानवमेन सद्गुरुः ॥ १४ ॥

छायां स्वकीयामथ चिन्तयन्गुरु-
देर्वीसमक्षं मनुसाधनोद्यतः ।
यं दुर्गमे तर्कनये विचक्षणं
स्वभ्यस्ततन्त्रद्वयमाचकाङ्क्ष च ॥ १५ ॥

निष्क्रान्तयात्रोऽयमुदीरितोत्तरं
द्विस्त्रिश्चतुःप्रश्नकदम्बके स्थिरम् ।
सच्चिद्गुरुर्मोमुददादिमाश्रम-
स्थैर्यं विनम्रं मुहुराशिषत्तमाम् ॥ १६ ॥

वेदान्तशास्त्रग्रहणोपयोगिनीं
विद्यां ग्रहीतुं मुनिजैमिनीरिताम् ।
सानुग्रहं यं परया मिथः पुरं
प्रीत्योपदिश्य प्रजिघाय मङ्गलम् ॥ १७ ॥

यः प्रत्यहं स्नानजपादिनैत्यकं
सत्रा च होमेन विधाय भक्तितः ।
श्रद्धासहायो नियमोपबृंहितं
शुश्रूषमाणः पितरौ ननन्द च ॥ १८ ॥

भूपं कदाचिद्धृतधर्मवर्मकं
गुण्याभिगण्यस्पृहणीयसद्गुणम् ।
विद्यालयायातमभूषयच्च यः
पत्न्या शुभस्योपदया च मालया ॥ १९ ॥

वृद्धौ तदेकात्मभवौ समादधे
यो मौनिभावे पितरावतिप्रियौ ।
आचार्यवाणीविपुलाशयादतो
धर्म्येण मार्गेण बहुप्रमाणकम् ॥ २० ॥

मान्यौ त्रयीतद्विदिताशयौ परा-
वाचार्यवाणीविपुलाशयौ प्रियौ ।
प्राज्ञाः स्थिरालोकनचक्षुषो मुदा
प्रशस्तमातापितरौ वदन्ति तौ ॥ २१ ॥

भक्तीश्वरौ शाश्वततृप्तिदौ यथा
संन्यस्तिसौख्यावगमौ यथोदितौ ।
धर्मादृतिस्वान्तशमाविवोन्नता-
वाचार्यवाणीविशदाशयौ मतौ ॥ २२ ॥

वाक्यार्थधीसत्यविनिर्णयौ यथा
विद्यापवर्गाविव संमतौ हितौ ।
मान्यौ गुरूक्तिप्रकटाशयौ तथा
पुण्योदितौ मे पितरौ हि तौ चिरम् ॥ २३ ॥

इत्यादिसद्युक्तिनिबद्धभाषणं
रत्नं महार्घं तपनीयगुम्भितम् ।
पित्रोः पदाब्जे विनिवेश्य निर्ममो
यः साधु लेभेऽन्तिममाश्रमं मुदा ॥ २४ ॥

शुद्धाद्विरूपाक्षबुधात्सुनिष्ठिता-
त्तन्त्रेषु सच्चिद्गुरुशिक्षितागमात् ।
अध्यैष्ट तन्त्रद्वयमम्बिकार्चन-
स्स्वयंप्रसन्नप्रतिभः कुतूहली ॥ २५ ॥

एवंप्रभावः शिवसक्तमानसः
सद्भावसंपादितसर्वभावनः ।
शर्वप्रियाराधनजातवैभवो
विश्वावनिष्ठः स गुरोर्बभौ नवः ॥ २६ ॥

प्रागेव वर्षद्वयतः सुशिक्षितं
तन्त्रद्वयं यन्मतिरूढतां गतम् ।
सूर्यो यथा लोकमदभ्रभेदकं
प्रालीलसत्तस्य स चार्थमद्भुतम् ॥ २७ ॥

व्याख्यानसिंहासनभूषणं स च
प्राचीनविद्वज्जनदत्तविस्मयः ।
व्याचष्ट शास्त्राण्यखिलान्यसंशयं
प्रक्रान्तसंदर्भविमर्शपूर्वकम् ॥ २८ ॥

आशान्तविश्रान्तयशःशुभस्वन-
प्राहूतविद्यार्थिकदम्बकाश्रितः ।
अध्यापिपच्छास्त्रचतुष्टयं स्वयं
तद्ग्रन्थकर्तेव गुरुः स संश्रितान् ॥ २९ ॥

ज्ञानेन शीलेन च विद्यया सुधीः
क्षान्त्या स बाल्येऽपि गृहीतवार्धकः ।
विद्यामृतं स्वीकृतमम्बुदो यथा
शास्त्रामृताब्धेः प्रववर्ष तापहम् ॥ ३० ॥

आराधयन्बालसुधांशुशेखरं
मन्त्रं सतन्त्रं निभृतं जपन्मुदा ।
आलोकयंस्तत्क्रममागमोदितं
प्रशान्तचेता भृशमुल्ललास सः ॥ ३१ ॥

क्रमं तदानेहसि याति भूयसि
श्रीशारदावेश्म विमानसुन्दरम् ।
आधायि सौवर्णमनेकमण्टप-
प्रासादरोचिष्णु विशिष्टशिल्पिभिः ॥ ३२ ॥

मूर्तिर्गुरोः प्राग्रसरस्य योगिनां
कीर्तिर्विशुद्धेव सुधाशिलामयी ।
कृष्णेन मुम्बापुरावासिना कृता
कृष्टिप्रशस्तेन सुधांशुसंनिभा ॥ ३३ ॥

श्रीकण्ठशास्त्र्युद्यममाधवद्रुमः
श्रद्धाप्रवेकोदकसेचनाश्रितः ।
प्रभूतवित्तप्रसवादिसंकुलः
कुम्भाभिषेकाग्र्यफलाय सज्जतः ॥ ३४ ॥

कारुण्यभूमौ सति लोकदेशिके
कालान्तकाराधनसिद्धसिद्धिके ।
काष्ठागतानेकविशिष्टसाधके
काष्ठां परां प्रापुरभीष्टसिद्धयः ॥ ३५ ॥

तस्यातिशान्तस्य विजेतुरिन्द्रिय-
ग्रामस्य सुत्राममुखाः सुरास्तदा ।
नेशांबभूवुर्गुरुवासवेशितुः
प्रत्यूहमाधातुमशेषरूपिणः ॥ ३६ ॥

अश्रान्तसंपूजितचन्द्रमौलिके
श्रीचक्रराजार्चनतुष्टदैवते ।
व्याकुर्वति प्राक्तनशास्त्रचोदितं
तस्मिन् समस्ताः शुभशंसिनोऽभवन् ॥ ३७ ॥

मारीचवल्ल्यो हि सपल्लवास्तदा
हारीतपक्ष्यर्थिनिवासभूमयः ।
जात्यश्च चाम्पेयसमाश्रितास्तथा
रेजुः प्रियालिङ्गितसुभ्रुवो यथा ॥ ३८ ॥

शुक्यः स्वभावोन्नतपादपाश्रिता
वाणीकराब्जाश्रितकीरवंशजाः ।
माता ह्यभीष्टं दिशतीति संश्रिता-
नाकारयन्पन्नजगेहिनीस्तवैः ॥ ३९ ॥

वीणां पुरा पुण्यकराब्जसुस्थितिं
कण्ठस्थसप्तस्वरशिक्षणादराम् ।
वाण्याः समाकर्ण्य पिकादयो वयः
स्तोत्रं वदन्त्यश्चितपञ्चमादयः ॥ ४० ॥

श्रुत्यन्तविश्रान्तविशाललोचन-
श्रीशारदामस्तकभूषणास्थितम् ।
कूटस्थमालक्ष्य विशाललोचना
मृग्यो विचेरुः किल तद्दिदृक्षया ॥ ४१ ॥

एणाजिनेऽप्याहितवान्गुरो कृपा-
मस्मासु चाधत्स्व तथेति तां गुरुम् ।
तं वक्तुकामा हरिणाः शिलोच्चये
शष्पप्रभामेचकिते विचेरुः ॥ ४२ ॥

सच्चिच्छिवश्रीनरसिंहमस्करि-
प्राशस्त्यवद्भूतनमस्करीश्वरम् ।
आलोक्य वंशोन्नतिगौरवं पुनः
संचिन्त्य वृद्धिं किल मस्करा ययुः ॥ ४३ ॥

श्रीचन्द्रमौलीश्वरदुग्धसेचन-
प्राशस्त्यवित्पूर्वगुरूपमो नवः ।
विन्देम साफल्यमतो वयं जने-
रित्येव दुग्धं बहु धेनुकं ददौ ॥ ४४ ॥

स्नाने जपाद्याचरणे दृढव्रते
वेदान्तवाक्यार्थविचारपद्धतौ ।
धत्ते नवः साम्यमयं च चिद्गुरो-
रित्यम्बु तुङ्गा वहति स्म हर्षिता ॥ ४५ ॥

अस्मत्सुहृद्रत्नघटाग्रहस्तक-
श्रीरत्नगर्भाग्रिमपूजनक्षमः ।
नूत्नो गुरुः प्राक्तनदेशिकोपमो
भातीति रत्नानि विरेजिरे गिरौ ॥ ४६ ॥

श्रीचक्रमस्मिन्किल गन्धदारुणि
श्रीशङ्करः स्थापितवांच्छ्रियोन्नतः ।
तत्सत्यसंकल्पमयोऽयमुत्थितो
भातीत्यहृष्यन्किल चन्दनद्रुमाः ॥ ४७ ॥

कर्पूरसंमिश्रितगन्धसारज-
प्रख्यातसेकं विदधात्ययं नवः ।
चन्द्रार्धचूडस्य सुधांशुरोचिषो
नित्यं त्विति स्म प्रलसन्ति चन्दनाः ॥ ४८ ॥

हंसप्रियावासगृहं नवं कृतं
सिद्धोऽस्ति सिद्धश्च गुरोश्च विग्रहः ।
हंसद्युतिः सेत्स्यति तन्महोत्सवः
श्रेयानिति ध्वानमधुः सितच्छदाः ॥ ४९ ॥

पुण्येन पूर्वेण सखा रसालयः
पुण्ड्रेक्षुरास्ते जननीकराम्बुजे ।
एवं स सेत्स्यत्यपि नः क्रमादिति
प्रापुः प्रहर्षं मधुरेक्षवस्तदा ॥ ५० ॥

मूर्तिर्गुरो राजति शर्कराद्युति-
र्वाणीकराब्जे मधुरेक्षुरस्ति च ।
वाणी गुरोरिक्षुरसोपमेति च
प्रीतिं समीयुर्मधुरेक्षवो गिरौ ॥ ५१ ॥

अक्ष्णा समाना अपि सद्गुरोस्तदा
देव्याश्च वाचां तपसे धृतोद्यमाः ।
हातुं विरोधं स्वजनेन चापलं
मीनाश्च तुङ्गापयसि स्थिताः शुभे ॥ ५२ ॥

श्रीशारदाचार्यभविष्यसन्महे
वादित्रसंह्लादिमयूरमार्जनाम् ।
श्रुत्वा मयूरा ननृतुर्दिवौकसा-
मभ्यस्यमानां स्तनयित्नुनिस्वनाम् ॥ ५३ ॥

शृङ्गेण धारामधुराभिषेचनं
श्रीचन्द्रमौलीशितुरिष्टदायिनः ।
सच्चित्समोऽयं विदधाति सांप्रतं
त्विति प्रचेरुर्गवया गिरेस्तटे ॥ ५४ ॥

त्र्यक्षस्य देवस्य परानुकम्पया
त्यक्तस्मरोऽम्बाकरभिक्षुराश्रितः ।
वंशस्य कीर्त्येति भृशं प्रिया गुरो-
राभ्यर्णिकाः संतुतुषू रसेक्षवः ॥ ५५ ॥

वाणीसुमस्तोममरीचिकर्बुर-
श्रीकेशपाशद्युतिसाम्यलिप्सवः ।
विसार्य बर्हान् गुरुराजसंनिधौ
केका वितेनुर्मधुरं शिखण्डिनः ॥ ५६ ॥

इत्यादिसंदर्शनजातकौतुकः
शृङ्गाद्रिसंस्थानगुरुर्महोदयः ।
सच्चिच्छिवश्रीनरसिंहभारती-
संकल्पितं पूरयितुं मनो दधे ॥ ५७ ॥

प्रावर्तत स्वर्पतिमान्त्रिसूक्तिक-
श्रीकण्ठविद्वद्विनयप्रजृम्भितम् ।
कार्यं प्रशस्तं विशदं यथापुरं
श्रीदाक्षिणाम्नायमठे श्रमं विना ॥ ५८ ॥

वाचा धिया साधुतया ससत्त्वया
धृत्या च दृष्ट्या क्षमया प्रशस्तया ।
नूत्ने गुरौ पूर्वसमे समेधिते
भृत्यास्त एवाधिकृताः पुरातनाः ॥ ५९ ॥

तस्मिंस्तथा राजति सत्पथे गुरा-
विन्दाविवाशेषकलासमन्विते ।
भूयःश्रियावद्युततामनाविले
द्यावापृथिव्यौ शुभशंसनोद्यते ॥ ६० ॥

संन्यासधर्मान्सदृशं प्रपालयन्
विद्याश्च हृद्याः स्ववशाः समेधयन् ।
अध्यापयंच्छास्त्रसमूहमाश्रिता-
न्प्राज्ञायि सर्वैः स च चिद्गुरुर्नवः ॥ ६१ ॥

नित्यं पुरस्तात्स गुरोरुपस्थित-
श्चन्द्रः कलास्तूर्णमहर्पतेरिव ।
गृह्णन्समानाश्रियमुद्वहन्परां
तन्वा समानाकृतिकश्च सोऽभवत् ॥ ६२ ॥

यामक्षमालामधिकण्ठमादधे
यच्चत्वरं श्रीगुरुरध्युवास च ।
यां भूषयामास च भद्रपीठिकां
काले जजागार च यत्र निर्वृतः ॥ ६३ ॥

स्थाने विशश्राम च यत्र पावने
यं यं चचार क्रममर्चनादिषु ।
अङ्गीचकार प्रतिमेव तन्मति-
स्तचत्समस्तं स तपःस्थिरस्थितिः ॥ ६४ ॥

बाल्येऽपि योगाचरणोन्मुखो गुरुः
कामं जिगायारिमदीनमानसः ।
मत्तेन्द्रियाश्वांस्तदधिष्ठितान्धिया
सम्यङ्निगृह्णन्यमयंश्च निर्ममः ॥ ६५ ॥

प्रातस्तरां स्नान् स्थिरविष्टरस्थितः
षड्वर्गजेतारमशेषदेशिकम् ।
सम्यक्स्मरंस्तन्मयतामवाप स
प्रत्यक्परस्तत्क्रतुमार्गसारवित् ॥ ६६ ॥

सर्वं व्रजन्देशिकसिद्धिमन्दिरं
संमानयंस्तानपि देशिकान्क्रमात् ।
सद्यः श्रियां स्तुतिमपि प्रियां विधेः
संकल्पसिद्धिं चकमे स सद्गुरोः ॥ ६७ ॥

आबालमावृद्धमहन्यहन्यमुं
प्रापुः सुधातीर्थजिघृक्षवो जनाः ।
श्रीरुद्रवाक्यामृतसारवर्षिणं
गङ्गोदकादप्यतिपावनं हि तत् ॥ ६८ ॥

सर्वाधिकारी गुरुबिम्बसौन्दरीं
चख्यौ मुदा तर्हि जगत्प्रियं गुरुम् ।
एकैकमङ्गं किल साधु बिम्बके
बध्नाति चक्षुर्हृदयं च पश्यताम् ॥ ६९ ॥

भक्तेक्षणार्हा भवरोगहारिणी
भद्रप्रदात्री भवमूर्तिभासुरा ।
भस्मार्धचन्द्राश्रितफालपट्टिका
भाति श्रिया मूर्तिरमानुषी गुरोः ॥ ७० ॥

षड्दर्शनीसूक्तिपरम्परा गुरो-
रनन्ततत्त्वार्थमणिप्रदीपितम् ।
अद्वैतसाम्राज्यशुभासनं मह-
न्निश्रेणिकासीदधिरोढुमुन्नतम् ॥ ७१ ॥

लब्ध्वा गुरुः पूर्वगुरोः सरूपतां
पाषण्डदुर्वादविभिन्नचेतसः ।
उद्धर्तुकामो मनुजान्विधिप्रिया-
कुम्भाभिषेके द्रुतमादधे मनः ॥ ७२ ॥

श्रीकण्ठविज्ञेन निवेदितक्रमं
निश्चित्य कार्यं स यथायथं गुरुः ।
सत्यस्मृतिः श्रीमदगाद्रिरो गृहं
सत्येशितुः पूजयितुं कुटुम्बिनीम् ॥ ७३ ॥

आज्ञया मनोभावमनन्यताभवं
ध्यायन्वगाह्याहृतनिर्णयो गुरुः ।
मेधाविने भूपतये शुभावहं
संदेशमेतं महमादिदेश तम् ॥ ७४ ॥

धीमान्स विद्वद्वृषभोऽसमप्रभः
संजातहर्षप्रचयः स्थिरास्थिरम्[1] ।
छन्दं स्फुरद्दक्षिणलोचनो गुरो-
रावेदयामास महीसुराधिपम् ॥ ७५ ॥
पत्युर्गुरोः सत्सदसो[2] वचोऽद्भुतं
कृष्णोदयो भूपतिरुत्सवप्रियः ।
श्रुत्वाभिनन्द्यं भवुकैकचिन्तन-
स्तत्संमतिं कामदुघां समार्पिपत् ॥ ७६ ॥
वाणीजगद्देशिकसंश्रितो महान्
संतोषसिन्धुः शुभमौक्तिकाश्रितः ।
वैशाखपूर्णेन्दुविजृम्भितो जग-
त्संतोषसंपत्प्रसवो महोत्सवः ॥ ७७ ॥
स्थास्याम्यहं तद्गुरुराजभाषिते
श्रेयःप्रदे वेदवचोऽतिशायिनि ।
एवं प्रशस्तं सदृशं सदुत्तरं
रत्नोपहारेण समं व्यसर्जयत् ॥ ७८ ॥
कर्णप्रियं कर्णसमस्य सात्वतः
कर्णाटदेशाधिपतेः करायितम् ।
कदम्बमालासदृशं स संमतं
काले विदित्वानुमतिं गुरुर्ददौ ॥ ७९ ॥

१. स्थिरेव स्थिरः तम्.
२. अत्र 'नमः सदसे नमः सदसस्पतय' इति मन्त्रप्रतीतिः ।

काकुत्स्थतुल्यावनिपालसंमतं
कार्तान्तिकोद्दिष्टमखण्डमङ्गलम् ।
कालं त्रिकालस्थितिदर्शनक्षमः
कातर्यहीनस्तमथावदद्गुरुः ॥ ८० ॥

वैशाखकृष्णप्रथमे दिने शुभे
लग्ने प्रशस्तेऽखिलमङ्गलास्पदे ।
श्रीशारदाम्बाखिलदेशिकाश्रयः
कुम्भाभिषेकः शुभदो भवत्विति ॥ ८१ ॥

श्रीचक्रपूजां ललितास्तवैः समं
कृत्वा समाकर्ण्य च नूपुरस्वनम् ।
देव्या गिरां मङ्गलशासनं गुरु-
र्मोदं परं प्राप निमित्तवित्सुधीः ॥ ८२ ॥

मूर्ध्नश्च्युतं पुष्पमुमापतेः स्वतो
दीपोत्थितान्भासुररत्नसंमितान् ।
दीप्तान्कणान्दूरविमर्शनोद्यतो
दृष्ट्वा स मेने भवुकं करास्थितम् ॥ ८३ ॥

पश्चात्क्षितीशं गिरिजासुतप्रभं
तं सर्वमुच्छ्रायमभीष्टसाधकम् ।
आवेद्य सद्यः प्रथमेन धीमता
सिद्धस्तदामंस्त कृतं तमुत्सवम् ॥ ८४ ॥

इत्थं प्रसन्नहृदयः स महानुभावः
साकं प्रधानसचिवेन धुरंधरेण ।
निश्चित्य मङ्गलमहोत्सवमिष्टदोहं
सर्वान्निवेदयितुमेनमथानुजज्ञे ॥ ८५ ॥

आकर्ण्य वाचमखिलेप्सितकामधेनुं
स्वानन्दनिर्भरहृदः स गुरोः प्रशस्ताम् ।
कृत्यं विधातुमधिकत्वरितोऽधिकारी
स्वभ्यस्तपूर्वचरितः समयेऽयतिष्ट ॥ ८६ ॥

अत्युत्साहः सरति सहजो भूसुराणां वपुष्मा-
नत्यासन्नं वदति च महं पुष्टसम्भार एषः ।
अत्याश्चर्या परिणतिरहो सद्गुरोरस्य सिद्धे-
र्लोकाम्बाया वहति करुणा मूर्तिमत्युज्ज्वलायाः॥८७॥

सौन्दर्यश्रीः प्रसरति शिवा कापि वाचामभूमिः
संभाराणां गिरिशकरुणाधेनुनिष्पादितानाम् ।
सत्येशाद्याः स्वयमपि सुराः संनिधातुं यतन्ते
सन्दर्भेऽस्मिन्निति सुरगणाः संगिरन्ते स्म वाणीम् ॥
॥ ८८ ॥

इति श्रीनृसिंहभारतीविजये
द्वितीये भागेऽष्टमः सर्गः ।

---

# नवमः सर्गः ।

मधुमासहृष्टपिकमञ्जुभाषिणीं
मणिभासिचञ्चुकमरालकेतनाम् ।
मधुचन्द्रिकायितदुकूलवाससं
मतिदायिनीमभिनतोऽस्मि मातरम् ॥ १ ॥

अथ शारदागुरुघटाभिषेचन
प्रथनप्रवृत्तशुभलेखदर्शिनः ।
मनुजाः समापुरधिकादरोन्नताः
शुभमृष्यशृङ्गगिरिमुत्सवोन्नतम् ॥ २ ॥

अमरापगेव निकषा हिमाचलं
चलवीचितुङ्गतटिनी यमुच्छ्रितम् ।
सकलाघहारिशुचिनीरशीतला
वहति प्रवाहमहिता शिलोच्चयम् ॥ ३ ॥

अविलासिरत्ननिकुरुम्बरश्मिना
परिवीतनूतनशुभांशुकश्च यः ।
निकटागतान्मृदुरवैः पतत्रिणा-
मतिथीन् स पृच्छति शुभं सुहृत्समः ॥ ४ ॥

अलकेव यत्र गुरुचन्द्रशेखर-
प्रियपुण्यमानवनिवासपूजिता ।
नगरी विराजति सदोत्सवाश्रिता
महनीयवृक्षपरिशोभिवाटिका ॥ ५ ॥

परिदृश्यतेऽत्र धरणीरुहव्रजः
स्पृहयालुनिर्जरगणाय दुर्लभम् ।
प्रसवं फलं मधु सुगन्धि चन्दनं
प्रमदेन दित्सुरिव दूरमुन्नतः ॥ ६ ॥

कृतकृत्यतां वहत साधु जन्मनो
गुरुशारदाशुभमहावलोकनात् ।
इति कीरभृङ्गमधुरस्वनैः सुरां-
स्तरवो वदन्ति नितरां समुच्छ्रिताः ॥ ७ ॥

यमाधिष्ठिता गरुडमुख्यपत्रिणो
ध्वनिना शुभेन महमेतमुद्यतम् ।
समयाकुरुध्वमिह यूयमागता
इति सर्वदेशमभितः समूचिरे ॥ ८ ॥

तदनुक्रमेण ववृधे सुधांशुना
विविधश्च वस्तुनिचयो दिने दिने ।
गुरुराननन्द विधिभामिनीकृपा-
सुरभिप्रसूतमिति तं विलोकयन् ॥ ९ ॥

सुरभिप्ररोहिमृदुपल्लवोच्चयैः
सुकुमारचित्रकुसुमोद्गमैरपि ।
सुरभिः सुरेशदयितामहोत्सवे
सुरसुन्दरीरपि महं व्यजिज्ञपत् ॥ १० ॥

उदभूद्दिशां च महवाक्ककुभा भृशं
गुरुराजकल्पसुरभूरुहोद्भवा ।
श्रवसि प्रफुल्लकुसुमावलिश्रियं
दधती सुगन्धिनवमल्लिकायिता ॥ ११ ॥

पुलिनानि शुभ्रसलिलेन निम्नगा
मुकुलानि पर्णनिकरेण वीरुधः ।
प्रमदाजनाः पिदधिरे महोत्सवे
जघनं स्तनं च शुभवाससा यथा ॥ १२ ॥

प्रविभिन्नमेघपटलैर्नभःस्थलं
शबलप्रभं गिरितटं च गैरिकैः ।
धरणीतलं च पतितैः सुमैर्नवैः
शुशुभे कुथैरिव वृतं मृदूज्ज्वलैः ॥ १३ ॥

अलिवृन्दहृद्यरवभव्यगीतयो
मधुमिश्रपुष्पनिकुरुम्बवर्षिणः ।
फलभारनम्रशिरसो महीरुहा
महपूजनादरयुता विरेजिरे ॥ १४ ॥

विदिशो दिशश्च विससर्प विश्रुति-
विधिगेहिनीगुरुमहोत्सवाश्रिता ।
विससर्प कान्तिरधिश्रृङ्गपत्तनं
विविधोपहारानिकरातिभासुरा ॥ १५ ॥

विजयश्रिया सममगारमिन्दिरा-
भरितं गुरोः स्फटिकपट्टनिर्मितम् ।
शुचि दक्षिणेन तटिनीं मणिप्रभा
परिभूतभानुकिरण नवं बभौ ॥ १६ ॥

नवतप्तहाटकमरीचिमिश्रितं
मघवाश्मवज्रमणिकान्तिभिश्रितम् ।
उदयप्रभाकरसमानमाबभौ
गृहमुत्तरेण च धुनीं गिरः शुभम् ॥ १७ ॥

ध्रुवचक्रमुच्चमभितो यथा दिवि
ग्रहभादिचक्रमधिकं विभासुरम् ।
शुचि सिद्धमास्त गृहवृन्दमुन्नतं
परितोऽब्जजन्मगृहिणीनिकेतनम् ॥ १८ ॥

सदनानि तारावधुसूर्यमण्डलं
लिलिहुर्नवानि विविधानि तन्महे ।
रचितानि भव्यसमवायशोभिते
सततागतक्षितिपकोविदान्विते ॥ १९ ॥

अभितो विदेहतनयापतेर्गृहं
विधिगेहिनीगृहसमक्षमद्भुता ।
धरणी बभावनतिनीचगोन्नता
सदृशी सवस्य सकलर्द्धिनन्दिता ॥ २० ॥

नवशर्करेष्टकचितानि भूभृतां
भवनानि नाकतलदुर्लभान्यपि ।
अतुलाभिरम्यनववस्तुसंविधा-
मधुराणि तत्र विविधानि जज्ञिरे ॥ २१ ॥

परितः प्रवृत्तमधितुङ्गमुन्नतं
पटवेश्म सर्वहितमम्बुजाकृति ।
परिपूजनीयमभिरूपवस्तुभिः
परिणाह्यदृष्टचरमङ्गणाश्रितम् ॥ २२ ॥

मघवादयो वियति वृद्धिकांक्षिणः
सहिताः प्रियाभिरखिलेश्वरीप्रियम् ।
महराजवैभवमशेषसिद्धिदा
महनीयमीयुरभिवीक्षितुं सुराः ॥ २३ ॥

मधुरप्रसन्नसलिलैर्जलाशया
व्यजनायमानचलपल्लवैर्द्रुमाः ।
महिमानमूचुरसमं जगद्गुरोः
पथि सक्ततांञ्छुभमहार्थिनो जनान् ॥ २४ ॥

पिहितार्करश्मिनिचया वलाहकाः
पवनास्तुषारजलबिन्दुवाहिनः ।
पतगा मृगाश्च कलगीतनिःस्वनाः
पथि संबभूवुरधिकप्रिया नृणाम् ॥ २५ ॥

जहृषुर्जगत्पतिसमानवैभवे
जगतीगुरौ रविसमानवर्चसि ।
जपभासमानचलविद्रुमाधरे
जयशब्दमूचुरमराः कलं दिवि ॥ २६ ॥

कबरीनिबद्धकुसुमा वरस्त्रियः
चलमेखलाभरणभासिमध्यमाः ।
करशस्तकुङ्कुमसुमोच्चयाः क्षणं
कलकोकिलध्वनियुता नता ययुः ॥ २७ ॥

मधुरोक्तिचारुमखिलाघहारिणं
मणिरत्नपूगकररम्यपाणयः ।
मनुजाः प्रसन्नमतयो यथायथं
महसां निधिं गुरुवरं ववन्दिरे ॥ २८ ॥

महिला मरालगतयो महप्रिया
महिताङ्घ्रिपद्मनिहिताम्बुजेक्षणाः ।
महतीनिनादसमगीततत्परा
महनीयदेशिकपदे ववन्दिरे ॥ २९ ॥

पुरुषार्थदायिगुरुपादपूजन-
प्रणतिप्रिया विनयनम्रमस्तकाः ।
पुरुषाः समर्प्य विविधोपदाः शुभा
महितं समापुरसमाननन्दथुम् ॥ ३० ॥

मधुरापुरादिनगरीनिवासिनो
मधुराभिनन्द्यकदलीफलोच्चयम् ।
मलयाचलान्तिकशिलोच्चयोद्भवं
मनुजाः पुरो गुरुपतेर्निचिक्षिपुः ॥ ३१ ॥

शुभमाहिमाद्रितटमा च कन्यका-
भवुकस्थलादखिलदेशिकोत्सवे ।
बहवः समाहितधियो विभण्डक-
प्रियपुत्रशैलमुपदोद्यता ययुः ॥ ३२ ॥

विरजीकृता नवजलैः सुशीतलैः
परितःप्रसर्पिशुभकेतनांशुभिः ।
भृशमुन्मनायितजनागमाकुलाः
पुरि वीथयः शुशुभिरे समन्ततः ॥ ३३ ॥

सह रामचन्द्रसुधिया वदावदा
बहवश्च मद्रनगरात्समागताः ।
अनुतीरमावसथमीयुरावृतं
फलपूगनम्रतरुकम्रपल्लवैः ॥ ३४ ॥

यतयोऽनुगीतनिगमान्तवाक्पराः
परिवीतपीतवसना बहुश्रुताः ।
करसक्तवेणुकलशाक्षमालिका
उटजानि शैलनिकटेषु भेजिरे ॥ ३५ ॥

अमृतातिशायिरसरत्नमौक्तिक-
प्रभवापगातटनिवासिनो जनाः ।
अभिलोकदेशिकमुदारमानसा
दधिरे प्रभूतमुपहारमुत्तमम् ॥ ३६ ॥

मधुपुष्पनिष्कफलपूगहारिणो
मनुजा महार्हमहपट्टधारिणः ।
मदनाभिनन्द्यतनवो महे गुरो-
र्महनीयपादनलिने ववन्दिरे ॥ ३७ ॥

चिरशिक्षितान्यभिमतानि गुह्यका
महगीतिरम्यवचनानि संजगुः ।
उपवीणयन्ति मुदिताः स्म किन्नराः
सह किन्नरीभिरनुरूपमुत्सवे ॥ ३८ ॥

धवलानि सैकततटानि निम्नगां
परितोऽद्रिकूटमभितः स्थलानि च ।
घननीलितान्युपवनैश्च शाद्वलै-
रधिकश्रियं विदधिरे महोत्सवे ॥ ३९ ॥

परिबर्हजातमभिजातसंमतं
परहंसराजपदपद्मयोर्युगे ।
प्रणिपातपूर्वमुपयुज्य सात्त्विकाः
प्रतिपेदिरे गुरुदृशात्मनिर्वृतिम् ॥ ४० ॥

अभिगम्य निर्वृतिमुदात्तवर्चसः
कुशलानुयोगवचनेन सद्गुरोः ।
सदनं समेत्य तटिनीतटाश्रितं
विधिलोकवासिन इवाभवञ्जनाः ॥ ४१ ॥

पुटभेदनं नवनिधीनुपेयिव-
त्पुरुषोत्तमोपमगुरूक्तिधेनुकम् ।
पुरुहूतपत्तनसमं समृद्धिभिः
पुरभित्सखोच्चपुरवच्च संबभौ ॥ ४२ ॥

समिदाज्यदुग्धहविरादि सात्त्विकं
सकलं समाश्रि विधिवत्प्रकल्पितम् ।
सवनावनिश्च समधिष्ण्यभूषिता
समदृश्यतात्र सकलामरप्रिया ॥ ४३ ॥

अधियज्ञशालमधिवेदि जज्ञिरे
कलशाः सुवर्णरचिताः पयोभृताः ।
शुभशुभ्रसूक्ष्ममृदुतन्तुवेष्टिताः
सहकारचारुदलराजिताननाः ॥ ४४ ॥

व्यनदन्सवेणुनिनदा विपश्चिकाः
सह शारदास्तवपरैः शुभस्वरैः ।
मृदुसिद्धकिन्नरसुरर्षितुम्बुरु-
प्रतिमानगायकविलासवादिताः ॥ ४५ ॥

व्यचलन्नपूर्वमहदर्शनोत्सुका-
श्चलकिङ्किणीमुखरमेखलाम्बराः ।
कवचायमानबहुभूषणांशुकाः
करदत्तपूर्णकलशाश्चलत्कुचाः ॥ ४६ ॥

सह शोभयाथ ववृधे महोत्सवो
द्विजगीतवेदमधुरस्वनेन च ।
विमलापगाजलतरङ्गनिःस्वन-
द्विगुणीकृतेन मधुलिट्स्वनेन च ॥ ४७ ॥

भुवनाभिवन्द्यनरसिंहभारती-
प्रतिबिम्बसंनिधिमुपागता जनाः ।
सकलाभिसन्धिमवदंश्चिरोत्थितं
कुशलानुयोगपरिसान्त्वितास्तदा ॥ ४८ ॥

अशनाययाथ च पिपासया जनाः
परिवर्जिता गुरुवचःसुधाशिनः ।
अधिशारदाकनकरत्नसन्दिरं
नितराममंसत तदात्मनोऽमरान् ॥ ४९ ॥

गजवाजिपत्तिरथमुच्छ्रितध्वजं
श्रमलेशवर्जितमपेतसंभ्रमम् ।
महदेषभासुरवपुर्गुरोः कृपा-
मभिलिप्सु शान्तहृदयं बभौ तदा ॥ ५० ॥

उषसि प्रसन्नहिमनीरमज्जनाः
समयेषु सङ्गवमुखेषु सज्जनाः ।
गुरुशारदावसथदर्शनोत्सुका
गणशो विजह्रुरनुलिप्तचन्दनाः ॥ ५१ ॥

प्रमदाः प्रहर्षधृतफालकुङ्कुमाः
प्रचलत्प्रवालमृदुलाधरश्रियः ।
प्रणयाहृतार्भकाविलासिमध्यमाः
प्रतिभासिहेमरशनाधृताम्बराः ॥ ५२ ॥

प्रतिकर्मभासिकचपाशमस्तकाः
प्रवहन्मरीचिमणिकुण्डलाञ्चिताः ।
प्रणदत्प्रसन्नमणिनूपुराङ्घ्रयः
प्रणतिं वितेनुरर्धशारदापदम् ॥ ५३ ॥

अतिदुर्लभाखिलशुभातिकामना
जिहते स वन्दितुमशेषमातरम् ।
वनिताः सुवर्णवरपात्रभासुर-
प्रसवाः पतिप्रणयभाषणालसाः ॥ ५४ ॥

कविचन्द्रशेखरगुरुं सपर्यया
निरवद्यया निखिलभव्यभूतया ।
अभिवन्द्य लोकजननीदृगुत्थया
मनुजा ननन्दुरसमानया श्रिया ॥ ५५ ॥

अथ राजराजविभवो निशामुखे
द्विजराजवच्छुभकरश्रियं वहन् ।
प्रमना महीसुरपुराधिपर्षभो
गुरुशारदामहदिदृक्षयोदगात् ॥ ५६ ॥

अधिगोपुरं परिवृतेऽधितस्थिवान्
प्रथमः सुधीभिरधिपो गुरूदितः ।
सखिभिश्च भूपममराधिपोपमं
विजयस्वनेन समयाधिजग्मिवान् ॥ ५७ ॥

अवरुह्य यन्त्ररथतो महीपतिः
प्रतिगृह्य हेमकलशं जयाशिषा ।
प्रतिनन्द्य वेदवचसा महाक्षता-
ननुयुज्य सर्वकुशलं श्रिया ययौ ॥ ५८ ॥

स्वयशःसमाप्लुतसुगन्धिमल्लिका-
सुममालभारिविपुलांसको नृपः ।
प्रतिगेहभासिशुभदीपिकावली-
धृततोरणाः परिजगाम वीथिकाः ॥ ५९ ॥

अवलोकयन्भवनवां महश्रियं
कलयञ्छ्रुतौ च विधिगेहिनीस्तवम् ।
परिसंस्पृशन्मृदुसुगन्धिमारुतं
विलसन् जगाम जननीगृहं नृपः ॥ ६० ॥

नृपतिस्त्रिलोकजननीकरायितं
जपदामभासिकरमिन्दुसुन्दरम् ।
प्रणिपत्य लोकगुरुमाश्रितादरं
विततार रत्ननिकरं स्फुरत्करम् ॥ ६१ ॥

स च वन्दमानमखिलावनं गुरुः
स्मयमानवक्त्रकमलोऽनुयुज्य च ।
सकलं समस्तविषयेषु मङ्गलं
स्मरतुल्यकान्तिमवदत्कृताञ्जलिम् ॥ ६२ ॥

गुरुशारदापदसरोजसेवन-
प्रतिलब्धसर्वनिधिराज्यभूपते ।
अयमुत्सवः सकललोकसम्पदे
भवतैव मान्यमतिना विधीयते ॥ ६३ ॥

तदलं महेन्द्रमहनीयतेजस-
स्तव कोविदस्य वचनेन भूरिणा ।
तरुणार्ककान्तिगुरुभक्तिभासिता
तव धीर्विभाति खलु सर्वतोमुखी ॥ ६४ ॥

इति सन्नतस्य गुरुसेविनोऽम्बिका-
चरणाब्जजातमरुणं सकुङ्कुमम् ।
विततार तेन च ललाटशोभिना
रुरुचे स भूपतिलको नवश्रिया ॥ ६५ ॥

गुरुराजभूपतिलकौ विचक्षणौ
वसुदेवनन्दनपृथासुताविव ।
अनुरूपभाषणशुचिस्मिताननौ
महितौ विरेजतुरधिश्रियौ प्रियौ ॥ ६६ ॥

अणिमादिसिद्धिकरमातृपादयो-
रुपदाः समर्प्य स सुखाकरो गुरुम् ।
सुदिनाहमद्य गुरुदेवदर्शना-
दिति तं ननाम हृदयङ्गमौक्तिकः ॥ ६७ ॥

अमितप्रभावमवलोक्य भूपति-
र्मितहृद्यसत्यवचनं गुरुं तदा ।
अवलोकयन्निव पुरातनं गुरुं
स्तिमितो बभूव स हि चित्रनिर्मितः ॥ ६८ ॥

अथ संमतो नरपतिस्तदाशिषा
सुधियां गिरा च रसभावपुष्टया ।
विधुभासिसौधमुडुदीपमुत्प्रभं
प्रमनाः कुबेरभवनोपमं ययौ ॥ ६९ ॥

अपरेद्युरुत्सवदिदृक्षयागतान्
नृपभूषणं स च महीसुराधिपः ।
विविधान्बुधान्परिबृढानुदारधीः
शुभमन्वयुङ्क्त गृहभोजनादिषु ॥ ७० ॥

विधिवद्धुताशनसमैर्द्विजातिभिः
सकलं व्यधायि निगमानुसारिभिः ।
नियमेन कर्म दिनसप्तके पुरा
सफलं मुहूर्तदिवसाद्गुरूदितम् ॥ ७१ ॥

दिवि संन्यधायि कविजीवगायकैः
सममप्सरोभिरखिलैः सुरैरपि ।
हरिचन्दनादिसुमवर्षिपाणिभिः
स किलोत्सवः सकललोकभव्यदः ॥ ७२ ॥

सदसि स्थिताः सकलतन्त्रवेदिन-
श्चतुराननप्रभगुरूक्तिनिष्ठिताः ।
जपहोमपूजनमुखं द्विजातयो
विधिवद्विधेयमखिलं वितेनिरे ॥ ७३ ॥

कृष्णो राजा सह बुधजनैः शारदासन्निधाने
कृत्स्नामुक्तां सकलगुरुणा नारदेनेव कृष्णः ।
कृत्वा रीतिं नियमसहितः स्वस्थचित्तोऽधिहर्म्यं
कृत्यं कर्तुं सकलभुवनश्लाघनीयं प्रयेते ॥७४॥

कृष्णद्वैपायनमुनिसमस्यास्य सिद्धस्य वाणीं
विद्यादोग्ध्रीममृतलहरीरूपिणीं कृष्णराजः ।
स्मारंस्मारं निभृतनयनोऽसिस्वदद्धृष्टरोमा
निःसीमास्ते वचसि सहजा माधुरी योगिनां हि ॥

ध्यात्वा देवीममृतकलशोद्भासिहस्ताम्बुजातां
स श्रीकण्ठं प्रथमपुरुषं श्वस्तनं कार्यशेषम् ।
उक्त्वा कृत्वा क्रमपरिगतां चन्द्रमौलेः सपर्यां
ध्यानासक्तः स्वयमपि गुरुः प्राप विश्रान्तिगेहम् ॥

सुकृतममितमस्य श्रीगुरोर्दृश्यमास्ते
वहति यदयमस्मिन्बालभावेऽपि सर्वम् ।
इति दिवि सुरबृन्दो दुन्दुभिध्वानपूर्वं
प्रियविनयवचोभिः पुष्पवर्षं ववर्ष ॥ ७७ ॥

इति श्रीनृसिंहभारतीविजये
द्वितीये भागे नवमः सर्गः

---

## दशमः सर्गः ।

अधिदेवतां मधुमयोक्तिसम्पदां
परिवादिनीपरिलसत्कराम्बुजाम् ।
सरसीरुहासनतपःफलायितां
निगमोक्तिसारलहरीं विभावये ॥ १ ॥

अथ सद्गुरूदितमनूनवैभवं
महसंप्रदायरचनाविचक्षणैः ।
कलशोद्भवादिमुनितुल्यवैभवै-
र्महकृत्यमग्र्यमखिलं व्यधायि च ॥ २ ॥

परिवादिनीभिरमरीबुभूषवो
गुरुशारदास्तवमभूतवैभवम् ।
वनिता जगुश्चलपयोधराधर-
श्रुतिनासिकामणिविलोचनभ्रुवः ॥ ३ ॥

क्रमुकैलकादियुतनागवल्लिका-
दलचन्दनप्रसवनिष्ककुङ्कुमैः ।
कनकांशुबद्धवसनैः सुवासिनी-
रपचिक्युरादरभृता बुधा महे ॥ ४ ॥

मणिकान्तिरञ्जितमहार्घभूषणा
महिताः सुगन्धिसुमदामकुन्तलाः ।
मधुसुस्वरा मदनवल्लभायिता
मरुदाववावुपचरन्विलासिनीः ॥ ५ ॥

गुरुशारदापदसरोजसेविनां
प्रतिभा नृणामभिनवार्थदर्शिनी ।
कविता च भावरसरीतिशोभिनी
महती महेऽत्र ववृधे प्रतिक्षणम् ॥ ६ ॥

गुरुराजसूक्तिजननीकृपोद्भवं
गुडपिष्टपायसघृतादिभोजनम् ।
गुधितं विभक्तमुचितं महे नृणां
गुणितं बभूव सुरसिद्धकांक्षितम् ॥ ७ ॥

सुषमाऽपि वाङ्मनसगोचरेतरा
शशिनः कलेव चतुरश्रमाबभौ ।
गुरुराराध च विधौ विधिप्रियां
मधुरं ननाद दिवि देवदुन्दुभिः ॥ ८ ॥

प्रथमोदितं शुभदिनं सहोदितं
प्रतिपूजितेन रविणा सहेप्सितम् ।
प्रणिपातबद्धकरसंपुटा जनाः
प्रतिभान्विता समभवंस्तदोत्सुकाः ॥ ९ ॥

सह शुश्रुवे चतुरवाद्यनिस्वनो
मधुमत्तभृङ्गनिनदेन चारुणा ।
सहहेमरत्नमणिमण्डनद्युति-
र्ददृशे च बालतपनश्रिया भृशम् ॥ १० ॥

नरसिंहपावनतपोवनालये
नवदेशिकामृतशिलातनुः शिवा ।
हरिदश्वभानुनिकरप्रभाधिक-
द्युतिरास शोणवसनावृतोज्ज्वला ॥ ११ ॥

उपहारपाणिरमरेन्द्रसंनिभो
नृपतिर्ययौ परिजनैः सहालयम् ।
सह रामचन्द्रबुधसुन्दरादिभि-
र्विनता ययुः परिबृढाः समाहिताः ॥ १२ ॥

अधितुङ्गमब्जनयना जना मुदा
परितश्च तस्थुरचलं नभःस्पृशम् ।
त्रिदिवौकसश्च सुमरत्नपाणयो
दिवि तस्थुरुत्सवसदक्षगीतयः ॥ १३ ॥

शुचिराजगाम गुरुचन्द्रशेखरः
शुचिबालसूर्यसदृशस्तमालयम् ।
शुभदृष्टिमेनमभिमेनिरे जनाः
शुकतुल्यपूर्वगुरुमेव सुस्मितम् ॥ १४ ॥

अथ तेन भद्रमभिरूपनिश्चितं
सकलं विधाय करणीयमुत्थितम् ।
गुरुमूर्ध्नि सिक्तमुदकं घटस्थितं
शिवमूर्ध्नि गाङ्गमिव तोयमाबभौ ॥ १५ ॥

विधिवद्विधाय सकलं गुरोः प्रियं
विधुभासुरस्य समये शुभावहे ।
वितरन्प्रसादमनुरूपया श्रिया
विशदांस्ततान स गुरुः समागतान् ॥ १६ ॥

विकसद्विशालजलजातलोचनो
विलसत्सुराधिपशरासनोज्ज्वले ।
विपुले गिरौ विविधगैरिके गुरु-
र्विरराज सर्वसुरविस्मयावहः ॥ १७ ॥

इति भासयन्प्रियगुरोर्महोत्सवं
गुरुमूर्तिसक्तनयनः श्रियेष्टया ।
बिभरांबभूव स मुनिः समागतान्
स्वरसप्रवृत्तविजयस्वनान् जनान् ॥ १८ ॥

सह भूपभूसुरमहाशयैर्गुरु-
र्धवलातपत्रचलचामरादिभिः ।
प्रमनास्ततार तटिनीं पयस्विनीं
विधिगेहिनीचरणसेवयोत्सुकः ॥ १९ ॥

अथ मित्रलब्धकरसम्पदाकरः
प्रसितस्त्रिलोकजननीसपर्यया ।
उदियाय भानुसदृशो निशामुखे
कथयन्मनोहरसुहृत्त्वमिष्टदम् ॥ ३० ॥

धवलीकृताखिलदिशां स कौमुदीं
विधुराततान महभद्रदीपिकाम् ।
पटहध्वनिः परिससार मङ्गलो
गजता चचार कनकांशुकावृता ॥ ३१ ॥

अथ सादिवश्यकविकास्तुरङ्गमाः
क्रमशो ययुर्नटनलोलमानसाः ।
जनता जगाम जयशब्दनन्दिता
प्रतिगेहबद्धकदली पुरी बभौ ॥ ३२ ॥

नवरत्नपूगखचितं महारथं
विधुमण्डलाभममरेन्द्रकल्पितम् ।
परितो विलम्बिमणितारकोज्ज्वलं
धवलच्छदध्वजविराजिमस्तकम् ॥ ३३ ॥

समधिष्ठिता धृतकिरीटकुण्डला
नवचन्द्रिकासितनवाम्बरावृता ।
अखिलाण्डकोटिजननी सरस्वती
जगताममोघवरसम्पदे बभौ ॥ ३४ ॥

अमराधिपः प्रभुरिवाखिलार्थितो
नृपतिः प्रभूतसुकृतार्थितां नतः ।
शिबिकां सुवर्णरचितां समाश्रय-
त्परिपूर्णभक्तिमिव च स्थितां बहिः ॥ ३५ ॥

शिवमौलिचन्द्रकिरणप्रभायितां
शिबिकाममेयमहिमाथ राजतीम् ।
अखिलाभिवन्द्यचरणो गुरुर्महा-
नधितष्ठिवानखिललोकनन्दनः ॥ ३६ ॥

परमाऽजनिष्ट महती महस्थितिः
परिशुद्धगीतनिनदाभिवर्षिणी ।
प्रतियत्ननिर्मितमहार्घसत्कृति-
प्रतिगेहनिर्मितवितानशोभिनी ॥ ३७ ॥

कियदस्य पुण्यमुदितं धरापतेः
कियती च भक्तिरखिलेश्वरीपदे ।
कियती विनीतिरपि सद्गुरूदितौ
किमपि प्रभाति यदयं महोत्सवे ॥ ३८ ॥

अयमेव भाति ननु देशिकोत्तमो
यदयं समस्तगुरुवैभवाश्रितः ।
गुरुशारदामहमभूतमद्भुतं
विदधाति पूर्वचरितेषु चाद्भुतम् ॥ ३९ ॥

इयमेव लोकजननी महीयते
यदियं दयानिधिरकिञ्चनान् जनान् ।
अपि दृष्टिधेनुकरुणारसामृतै-
र्विदधाति जन्मभयदाहवर्जितान् ॥ ४० ॥

इति तत्र सद्गुणकथानशे दिशो
महतीरिता महितनारदर्षिणा ।
अशरीरिणी समभवच्च भारती
महरीतिरद्भुततमेति मङ्गला ॥ ४१ ॥

क्षणदा क्षणेन महता विभासुरा
विशदा क्षणेन सदृशी तदाभवत् ।
कविगायकस्तवमृदुस्वराश्रिता
चतुराननादिसुरबृन्दनन्दिता ॥ ४२ ॥

नृपतिस्तदाप हरिदश्वसश्रियं
बहुजन्मजातशुभभाग्यसंभृतः ।
अरुणोदयेन मनुजा जजृम्भिरे
सहनेत्रवक्त्रहृदयाब्जभासुराः ॥ ४३ ॥

सरसीरुहेषु रविरर्पयंच्छ्रियं
गुरुशारदामुखसमानताकृते ।
उदियाय पूर्वककुभि त्रयीतनु-
र्गुरुलक्षमश्च विनिवारयन्नृणाम् ॥ ४४ ॥

अथ धर्ममूलमवनीपतिर्मुनि-
त्रिदशाभिवन्द्यमहिमा परेद्यवि ।
नवतप्तहाटकधराप्रतिष्ठितं
गुरुमाननाम पुरराष्ट्रवृद्धये ॥ ४५ ॥

गुरुपादपूतममरार्थितो नृपः
सुमदाम मूर्ध्नि मकुटाधिकप्रभम् ।
विलसन्वहन्नवनिधानभासुरः
समियाय देशिकमधीश्वरीगृहम् ॥ ४६ ॥

ललितैर्मनोहरसहस्रनामभि-
र्ललितास्तवैः सह ललन्तिकोज्ज्वलाम् ।
ललितामपूजयदशेषमातरं
लयशोभिगीतमधुरस्वरो नृपः ॥ ४७ ॥

अथ भिक्षया च निजवंशसिद्धया
निगमान्तसारपरिपूर्णमानसम् ।
गुरुशेखरं समभिनन्दयन्नृपः
परमामवाप च मुदं समीहिताम् ॥ ४८ ॥

स यतिस्ततर्प गुरुचन्द्रशेखरः
सचराचरेण जगतात्मवित्तमः ।
गुरुरीक्षते स हि समस्तमात्मनि
प्रतिभासमानमनिशं गतेषणः ॥ ४९ ॥

कविवासरे भगवतीं सरस्वतीं
कवितुल्यमौक्तिकलताल्सद्गलाम् ।
करुणामृतोदधिकटाक्षभासुरां
कलगीतिनिर्झरविपाश्चिकाकराम् ॥ ५० ॥

कनकाम्बुजातपदपद्मनिक्वण-
त्कलहंससस्वनकलापकान्तिदाम् ।
गुरुवाग्रसामृतसुनिर्वृतान्तरो
गुणभूषणः परिचचार भूपतिः ॥ ५१ ॥

तदनु प्रियेण गुरुणा समर्पितं
गुणरत्नपूगसदृशं स कुङ्कुमम् ।
नवरत्नरञ्जितनवाङ्गुलीयके
नृपतिः करेऽधिकलयन्नशोभत ॥ ५२ ॥

प्रणमन्कुबेरसदृशो गुरुं वरं
विहितैकबद्धधिषणो महीपतिः ।
गुरुराजसूक्तिकृतमङ्गलोदयो
निजहर्म्यमागमदशेषतोषकृत् ॥ ५३ ॥

स्थिरवासरे स नरसिंहभारती-
समचन्द्रशेखरकृतानुशासनः ।
सममद्वितीययशसा महोत्सव-
प्रणिधानबद्धहृदयः पुरं ययौ ॥ ५४ ॥

शिवमूर्तिभासुरनवालये शुभे
  निखिला जनाश्च मिमिलुर्यथोचितम्।
वसु सप्रशंसममितं ददुर्वरं
  सहसा कुबेरसदृशा बुभूषवः ॥ ५५ ॥

स्थिरवासरे तदनु संपदाकरे
  स्थिरवस्तुदर्शनविचारणक्षमा।
स्थितिमाप काचन सभाभिसारदं
  स्थिरधीविचक्षणविशेषशोभिनी ॥ ५६ ॥

पटुकाहलादिनिनदश्च भव्यदः
  परितः स्थितानथ बुधानजूहवत्।
समितिश्च शास्त्रिवररामनन्दिता
  विबुधानतिष्ठिपदथाश्रवान्गुरोः ॥ ५७ ॥

स च सर्वविद्गुरुरवाप तां सभां
  सकलाश्च भव्यजयशब्दमूचिरे।
सममेव नेमुरखिला जगद्गुरुं
  समदृष्टिभव्यपसुखप्रदायिनम् ॥ ५८ ॥

अथ स प्रणम्य गुरुराममोदित-
  क्रमसारविच्छुककरां सरस्वतीम्।
प्रणतावलोकनविशाललोचनो
  निषसाद निर्मलपवित्रविष्टरे ॥ ५९ ॥

शुकवद्गुरुः शुभमतिस्तदोत्तरा-
वदनो विचित्रकनकासनस्थितः ।
सरसीरुहासनसखीं सरस्वतीं
नितरामचिन्तयदमोघवाक्प्रदाम् ॥ ६० ॥

उपहारमुत्तमतमं वटोदर-
क्षितिपालरत्नविनयादरार्पितम् ।
विविधोपचारवचनातिसुन्दरं
विबुधः समक्षमवनीगुरोर्न्यधात् ॥ ६१ ॥

अपरे च तत्तदुचितं व्यजिज्ञपन्
कवयः कवीशमुनितुल्यतेजसः ।
पुरतो गुरोः शुभसमीक्षणाश्रिताः
कवयांबभूवुरखिलाश्च कोविदाः ॥ ६२ ॥

अथ संस्कृतेन शुभवर्णशोभिना
क्रमबद्धहृद्यपदपङ्क्तिचारुणा ।
उपचक्रमे रचयितुं स वाङ्मुखं
वचसा मृदुस्वरविहारिणाद्भुतम् ॥ ६३ ॥

ननु धर्मरक्षणकृते जगत्पति-
र्नवनीरदाभगिरिजार्धविग्रहः ।
नलिनीभवादिसुमनोनमस्कृतो
नटभूपतिर्भुवमवततार शङ्करः ॥ ६४ ॥

स पुनः समस्तभुवनावनोद्यतः
समये सुधन्वनरपालवन्दितः ।
सहितश्च वार्तिककृदादिभिक्षुभिः
समयात्ररक्ष निगमोदितान्गुरुः ॥ ६५ ॥

गुरुरा च बिन्दुसरसोऽखिलां महीं
सह पर्यटन्नखिलशिष्यसम्पदा ।
सुदृढं निरूढमपि दुर्मतं गिरा
तरसा निरस्य विजयं प्रपेदिवान् ॥ ६६ ॥

स च शारदामखिलवेदरूपिणीं
जननीमतिष्ठिपदिहाद्रिसानुनि ।
भगवान् शमादिनिधिरप्रकम्पकं
प्रथयाम्बभूव स हि वैदिकं मतम् ॥ ६७ ॥

निगमप्रवृत्तपथरक्षणादरा
निखिलाश्च निर्जितनिसर्गशत्रवः ।
निटिलेक्षणांघ्रिजलजार्चनापराः
नियमेन तामिह ववन्दिरे गिरम् ॥ ६८ ॥

प्रथितेन पुण्यसमवायरूपिणा
प्रथमेन पूर्वगुरुणा तपस्विनाम् ।
प्रचयं तदीयसरणेश्चिकीर्षुणा
प्रणिधानमुत्तममधायि योगिना ॥ ६९ ॥

अवदातनामतनुरूपवीक्षण-
प्रतिभाषणादिमहितः स चिद्गुरुः ।
गुरुमारराध भगवन्तमादिमं
नितरां तदीयजननावनौ मुदा ॥ ७० ॥

स च चिद्गुरुः सकललोकमङ्गल-
स्थिरबद्धकङ्कणकरस्तपोनिधिः ।
अभिसंदधे तदनु शारदागृहं
प्रणवं विधातुमधिमङ्गलावहम् ॥ ७१ ॥

अवधानमस्य शिवतातिसद्गुरो-
रखिलेश्वरार्चनपरस्य मूर्तिमत् ।
अभिवीक्ष्यते च विषयेतरं गिरा-
मतिमानुषी ननु तपस्विशेमुषी ॥ ७२ ॥

प्रयता गिरो वसतिरत्र राजते
प्रतिनन्दिनी शशिकलेव निर्मला ।
प्रतिभा गुरोरिव सतः प्रसर्पिणी
प्रकृतिः परेव सकलार्थधारिणी ॥ ७३ ॥

इयमन्तरा हरिहयेशदिङ्मुखी
दिशती श्रियं भुवनकोशभासिनीम् ।
इनकोटिकान्तिरधिदेवता गिरां
स्मृतिदर्शिनी शुभचयस्य राजते ॥ ७४ ॥

सरसीरुहाक्षसरसीरुहात्मज-
प्रमुखामरातिविनुतोच्चवैभवः ।
जगतीगुरुः स भगवान्महेश्वरो
जयतीह शंभुरखिलेष्टसिद्धये ॥ ७५ ॥

इतरे निसर्गपरिबृंहितौजसो
दधतः प्रभासुरममन्दवैभवम् ।
इह सम्पदं परिदिशन्ति वैदिकीं
गुरवस्त्रिलोकशिवतातयोऽनिशम् ॥ ७६ ॥

प्रतिभानवानयमपीह सद्गुरु-
र्दधदैन्दुशेखरमशेषतापहम्
तपसो वनेऽनुतटिनीतटं महो
विजयश्रियं वहति सिद्धवन्दितः ॥ ७७ ॥

किमितोऽधिकं जगति धर्मरक्षणे
करणीयमस्ति गुरुणा विशेषतः ।
रुचिरस्तु सद्गुरुवचःसुधौषधे
भवतामितीह जननीकृपेदृशी ॥ ७८ ॥

अधिहेममन्दिरमशेषनन्दिनीं
जननीं गिरां गुरुवरस्य नन्दिनीम् ।
प्रतिनादितेन ककुभो विसारिणा
परया मुदा नु कुमुदेऽस्य भारतीम् ॥ ७९ ॥

वचसां ततिं तदनु चान्द्रशेखरीं
पयसां झरीमिव च कामधेनवीम् ।
लहरीं शिवामिव च सौरसैन्धवीं
परिषस्वदे ज्वरहरीं मुदा सभा ॥ ८० ॥

अधिभित्ति चित्रलिखितेव निश्चला
परिषत्प्रहर्षपुलकोत्कराञ्चिता ।
स्वदितातिपूतगुरुभारतीरसा
सदृशीमवाप परनिर्वृतिं शिवाम् ॥ ८१ ॥

अथ गुरुरनुरूपं भाषमाणान्प्रबन्धान्
शिवनवगुरुदेवीकुम्भसेकोत्सवान्ते ।
द्रुतकनकपिशङ्गैरक्षतैर्नालिकेरै-
रपि बुधसमवायानन्वगृह्णात्कृपालुः ॥ ८२ ॥

अखिलभुवनमातृश्रीकटाक्षप्रसूता-
नथ बुधवररामः सद्गुरुस्वान्तवेदी ।
अभिनवकरभूषानिष्कपीताम्बरादी-
नभिगुरु परिबर्हान्पण्डितेभ्यो व्यतारीत् ॥८३

निधिसमधनपोषं पण्डितांस्तान् स पुष्ण-
न्क्रमविलिखितनामादेशमाकारयंश्च ।
अकलुषमति यावज्जीवमम्बार्चनोत्कान्
गुरुवरपदभक्तान्सद्गुरूक्तया बभाषे ॥ ८४ ॥

निगमवचनसारास्वादतृप्तान्तरङ्गा-
न्स्वयमपि जनयोगक्षेमकृत्यप्रवृत्तान् ।
अवतु भुवनमाता शारदा कोविदान्वो
नवरसभरितानां सद्गिरां सम्पदेति ॥ ८५ ॥

दिनकरकरराजन्निष्ककौशेयभूषा
निरुपमशुभलक्ष्मीसंवृताङ्गा बुधास्ते ।
महिमभवनमारात्सद्गुरुं संप्रणेमुः
सह नवमृदुगीतैरुत्सवावेदिपद्यैः ॥ ८६ ॥

प्रादुर्भूता महरुचिभृतो दीपिकास्तारकाभिः
साकं हृद्याः शुभकलरवा वाद्यशब्दैश्च नृणाम् ।
रौक्मैः पात्रैः सह परिजनाः स्वाद्यनैवेद्ययुक्तै
रम्यैः स्तोत्रैर्नवरसयुतैः शिष्यवर्गास्तदानीम् ८७

सिद्ध्या साकं त्रिभुवनतले भक्तिराविर्बभूव
श्रुत्या साकं स्मृतिरनुगुणा स्वार्थनिष्ठामवाप ।
सत्या श्रद्धा गुरुवरगिरा साकमासांचकार
प्रज्ञा साकं सततहितया विद्ययापाभिवृद्धिम् ॥८८

लक्ष्मीरास्तां सह शुभधिया सत्यवाचां सवित्र्या
पुष्टिः क्षान्त्या सह सहभवक्रोधलोभापहन्त्र्या ।
कीर्तिः शान्त्या सह निरुपमानन्दसन्दोहदात्र्या
मेधा तृप्त्या सह समहितप्रीतिदात्र्या जनानाम् ॥

अन्नं भूयाद्विधिसमुचितं तेजसा साकमिष्टं
वीर्यं प्रेष्ठं सुरसुखकृता कर्मणा चोदितेन ।
नित्यारोग्यं सह शुभहृदाभीप्सितेन प्रकृष्टं
श्रेयो भूयः सह निरुपमं मङ्गलेनाखिलेन ॥९०॥

एवं क्षेमाचरणनिपुणो मङ्गलं भाषमाणः
सर्वान्भ्रान्विमलधिषणः सादरं वीक्षमाणः ।
व्याचक्षाणः सुकृतसरणिं सर्वविद्याधुरीणो
योगी देवो विजितधिषणः प्राप्तकर्मप्रवीणः ॥९१॥

मातुर्देव्याश्चरणकमले सर्वसम्पन्निवासे
दत्वा नानाकुसुमनिचयं फुल्लमामोदि दृश्यम् ।
स्तुत्वा श्रौतैरमृतवचनैर्मङ्गलैर्मङ्गलानां
क्षेमायेष्टां विविधरचनामारतिं संवितेने ॥ ९२ ॥

लाजारामाः सुभगमकिरन्सम्प्रहृष्टाः प्रसूनै-
र्वेदान्विप्रा मधुरमपठन्सुस्वरेण क्रमेण ।
गाथा रम्याः सदृशमवदन्गायका लीनचित्ता
वीणागानं मधुरमलपन्वैणिका मातुरग्रे ॥ ९३ ॥

आशीर्वादान्समुदितफलान्साधकेभ्यो वितन्व-
न्विष्वद्रीचः समतिकलयंस्तेषु कम्रान्कटाक्षान् ।
सध्रीचः स त्रिभुवनगुरुः सम्पदां नित्यतृप्तः
फुल्लाम्भोजं सफलमदधाच्छारदायाः पदाब्जे ॥९४॥

स्तुत्वाचार्यं परमपुरुषज्योतिषि स्वे प्रसन्नं
वाचां देवीमपि भवुकदां मातरं शारदां ताम् ।
नित्यास्वाद्यां मधुरमधुरां शर्करां सर्वसारां
लब्ध्वा भक्ता विगलितभिदा निश्चलाश्चानन्दुः ॥

इति सच्चिदानन्दशिवाभिनवश्रीनृसिंहभारती-
विजये उत्तरभागे दशमः सर्गः ॥

श्रीमीनाक्षी रक्षतु ॥

## ॥ गुरुदेवतास्तुतिः ॥

श्रेयःपद्यां सकलसुगमामाशमोक्तां मधूक्त्या
योऽन्वाचष्ट स्फुटमभिमतां दुष्टवादान्निरस्यन् ।
आचार्यं तं प्रथितभगवत्पादनामानमाद्यं
कुर्वे स्वस्थं विशदमतिदं श्रेयसे मानसेऽहम् ॥ १ ॥

सर्वज्ञतावसतिरमेयवैभवः
सच्चिच्छिवाभिनवनृसिंहभारती ।
अङ्गीकरोतु नवकृतिं पदार्पिता-
मानन्दवारिधिरतिचारुवाक्प्रदः ॥ २ ॥

श्रीचन्द्रशेखरगुरुं प्रणिधाननिष्ठं
हैय्यङ्गवीनरसवाहिवचोनिदानम् ।
आराधयामि कृतिपुष्पसमर्पणेन
प्रख्यातमस्तु तदिदं बुधनन्दनीयम् ॥ ३ ॥

कान्तिं कांचित्कलयतुतमां कान्तिमत्यम्बिकास्यां
कृत्यां देवी सकलभुवनालोकसम्पादयित्री ।
रत्नान्यग्र्याण्यधिकरुचिराण्यश्मनश्चातिनीचान्
भास्वत्कान्तिः खलु विकसयत्येकरूपा हि मान्या ॥

या वाग्देवी शुभदभगवत्पादवाचानुकूला
प्रत्यग्रूपा प्रणवशरणा राजते चक्रराजे ।
तत्पादाब्जप्रयतमधुरस्पर्शसंजातसारं
काव्यं नव्यं सकलविदुषामेधतां कर्णजाहे ॥ ५ ॥

वाचां हृद्या प्रवहति झरी स्वादनीया विशुद्धा
व्यानाद्यस्या नवरसभृता निम्नगेवाद्रिशृङ्गात् ।
तत्पादाब्जे मणिगणलसन्नूपुरारावरम्ये
भक्तिस्यूतां नवकृतिमिमामर्पये वाग्विवृद्ध्यै ॥ ६ ॥

श्रीमीनाक्षीपरमकरुणासारसर्वस्ववेदि
प्रज्ञाभास्वत्प्रथितपरिषत्प्रीतिसंदोहपात्रम् ।
सत्सौन्दर्यद्युतिततिपदे सुन्दरेशाङ्घ्रिपद्मे
नव्यं काव्यं सुमचयसमं न्यस्यते तत्प्रणेत्रा ॥ ७ ॥

साध्वी रीतिः कविवरधृता मास्तु शब्दार्थनिष्ठा
पुष्टिः शुद्धा नवरसभृता मोददात्री तथापि ।
मीनाक्ष्यम्बाचरणकमलस्यन्दिसारातिसान्द्रं
काव्यं नव्यं सदयविबुधालोकनीयं समास्ताम् ॥८॥

काव्येऽप्यस्मिन्कलयतु रुचिं सारहीनेऽप्यबद्धे
नानादेशस्थितिपरवचोनैपुणीदूरभूते ।
लोकाचार्यश्रवणमधुराख्यानसारप्रचारः
शुष्केऽप्यग्र्ये मधुनि निहिते स्वादिमास्ते फले हि ॥

सौन्दर्यं विदधातु पादकमलं श्रीसुन्दरस्येशितुः
काव्यस्यास्य समर्पितस्य सदृशं जातस्य भक्त्यम्बुधेः ।
मीनाक्षीनयनारविन्दविगलत्सौन्दर्यसाराञ्चितं
यच्चित्ते परिचिन्तितं वितनुते श्रेयो नवं निर्भरम् ॥१०॥

माधुर्यं विदधातु मीननयना नव्येऽपि काव्ये स्थिरं
नित्यव्याहृतिशीर्षभासुरमणिः पादारविन्दार्पिते ।
यत्पादाब्जसमाश्रिता हि मधुरा भाति प्रशस्ता पुरी
यद्दृष्ट्या च तदीश्वरो विजयते सौन्दर्यपाथोनिधिः ॥

यामाध्यायन्मधुरवचनक्षीरसंपादयित्रीं
लोकाचार्यप्रथितचरितं शान्तिदं निर्ममे स्म ।
तस्यैतस्य प्रचयकृतये मङ्गलेशानयुक्ता
सा नित्यश्री रचयतु परा मङ्गलं मङ्गलाम्बा ॥१२॥

यः सावित्रीं सवितृवसतिं सर्वविद्यास्वरूपा-
मीक्षांचक्रे निरवधितपा बुद्धिसंचोदयित्रीम् ।
ब्रह्मर्षिं तं सकलविबुधप्रीतिसंपादनाय
विश्वामित्रं कुलगुरुमहं नूलकाव्ये नमामि ॥१३॥

तद्गोत्रस्थं सरसवचसं रत्नखेटं मखीन्द्रं
भाषाषट्कप्रवचनपरं सर्वतन्त्रस्वतन्त्रम् ।
नानाग्रन्थप्रणयनचणं नौमि तद्वंशजातः
काव्यस्यास्य प्रचयगतये भक्तिदब्धस्य भक्त्या ॥

षष्ठो यः श्रीमखिपतिभवस्वामिनो भाष्यकर्तुः
कर्मन्दीन्द्रादधिगतमनुः केशवाद्ब्रह्मनिष्ठात् ।
सिद्ध्या भूयस्तपसि निरतो लब्धविद्याधिपत्यः
कामाक्ष्यम्बाचरणनलिनासक्तचित्तो बभूव ॥१५॥

यश्चोद्दण्डं विबुधमजयल्लब्धबालात्मभावः
काञ्च्यां कश्चित्समयमवसत्तूप्पलाख्याग्रहारे ।
नानासिद्धिप्रथितमहिमा श्रीनिवासाध्वरीन्द्रो
ग्रामं प्रागात्कुलपतिरयं मङ्गलं सत्यपूर्वम् ॥१६॥

तत्पुत्रेषु क्षितिपतिहितो राजचूडामणिर्यो
बाल्येऽप्यम्बापरमकरुणासिद्धवैदुष्यपूर्णः ।
ग्रन्थांश्चक्रे सरसवचनानत्र काव्येऽपि रुच्यै
वन्दे वंश्यं तमपि कवितासार्वभौमं मखीशम्॥१७॥

भारद्वाजं कविकुलपतिं नीलकण्ठाभिधानं
ताम्रास्रोतोरुचिभृतगिरं यायजूकं नमामि ।
यद्ग्रन्थेक्षा लघु वितनुते मीननेत्राकृपेव
प्रज्ञावृद्ध्या मृदुलरचनां मन्दकस्यापि मान्याम् ॥

मौढ्योद्भूतां मम कविवरा मर्षयन्तु प्रवृत्तिं
काव्ये नूत्ने भुवनगुरुमहासच्चरित्रप्रवृत्ते ।
श्रीवाग्देवीपरमकरुणादुग्धसारं धयेयं
जन्मन्यस्मिन्निति कृतिमिमामर्पये तत्पदाब्जे ॥ १९ ॥

---

## ॥ उपहारपत्रम् ॥

श्रीमातुश्च त्रिभुवनगुरोर्दिव्यकुम्भाभिषेक-
प्रादुर्भूतामुचितरचनावासितां भक्तिसाराम् ।
भास्वद्वर्णां वचनकुसुमां सद्गुणस्यूतिरम्यां
स्वामिन्मालामुपहृतिमिमामर्पितां संगृहाण ॥ १ ॥

कर्णाटेन्द्रे गुरुशुभवचोरत्नभास्वत्किरीटे
पूर्णे चन्द्रे लसति जनता मोदतल्या महेऽस्मिन् ।
सैन्योद्भूतं क्वचिदपि रजो राधतापश्च नास्ते
रागस्तापः कथमिव भवेद्ब्रह्मविन्निर्मलेन्दौ ॥ २ ॥

वाचां देव्या सह गुरुपतेरुत्सवे कुम्भसेके
देवा ज्योतिर्वलयमिषतोऽहर्दिवोत्थप्रभेदम् ।
दूरीचक्रुर्जनततिरपि त्यक्तनिद्रा समास्ते
विद्भद्भानौ विलसति कथं स्यादविद्वत्प्रचारः ॥३॥

विद्याज्योत्स्नाविशदशिबिकावाहनारूढहंसो
योगीन्द्रोऽम्बामिनसमरथे चक्रराजे निषण्णाम् ।
भक्तान् लक्ष्मीं गमय कृपयेतीरयन्मन्त्रवृन्दै-
रानन्दोत्थैरमितसुखदै राजते राजवीथ्याम् ॥ ४ ॥

योगक्षेमोदधिहिमकरे राजमाने महेऽस्मिन्
दूरीभूते दुरितनिवहे व्याधिचोरादिजन्ये ।
भैषज्यादिप्रचयकरणं वर्तते नाममात्रं
दीप्रब्राह्मे महसि भिषजः किङ्करा वा किमर्थाः ।।५।।

आभाषन्ते मधुरभणितिं संनताश्चिह्नलक्ष्याः
कृत्यं स्वं स्वं लघु विदधते राजकीया नियुक्ताः ।
कृष्णो राजा सुमतिरवनिं धर्ममूलं प्रशास्ति
स्थाने सर्वं गुरुरभिमतः सत्यकामो यदस्ति ।।६ ।।

तुङ्गादेवीमृदुमृदुचलद्वीचिहस्ताब्जपोते
प्रातर्द्योतिद्युमणिमणिनिभाभासिसिंहासनस्था ।
कृष्णक्षोणीपतिवरमहापद्मजामूल्यरत्नै-
राचार्येण स्थिरशुभकृते पूजिता शारदास्ते ।। ७ ।।

वाचां देवी सकलशुभदा भद्रपीठाभिषिक्ता
विद्यां लक्ष्मीं दिश समुचितामर्भकेभ्यः सदेति ।
उक्त्वाचार्य सपदि जनतां तन्त्रयन्स्वस्वधर्मे
पुत्रान्विन्द त्वमिति नृपतिं वीक्षतेऽनुग्रहेण ।। ८ ।।

बुद्धिं शुद्धां सततसुखदां साधकान् संनयन्ती
शोभां नूत्नां मणिगणलसद्भूषणानां दिशन्ती ।
आत्मज्योतिः सततमुदितं रत्नकौशेयभासा
व्याचक्षाणा भुवनजननी शारदा संविभाति ।।९।।

सत्ताटङ्कश्रवणयुगला रत्नजुष्टोत्तमाङ्गा
सुभ्रूवल्लीमधुरनयना चन्द्रलेखाभफाला ।
वीणाहस्ता विमलवसनद्योतिकाञ्चीकलापा
वेदैर्वाद्यैः स्तुतिभिरपि गिरां देवता गीयतेऽत्र ॥ १० ॥

राकाशीतकरानना नवपयोवाहोल्लसत्कुन्तला
फुल्लाम्भोरुहलोचना तिलसुमोन्नासा प्रवालाधरा ।
कम्बुश्रीजयिकंधरा सुरतरुप्रास्निग्धशाखाकरा
माञ्जिष्ठाम्बरराजिमञ्जुलतनुः श्रीशारदा द्योतते॥११॥

शीर्षस्मेरविचित्ररत्नमकुटा कर्णोज्ज्वलत्कुण्डला
फालोल्लासिलसन्तिकामणितातिश्रीजुष्टनीलालका ।
कम्बुश्रीयुतकन्धरा कुचलसत्प्रालम्बिमुक्तालता
कौशेयावृतविग्रहा विजयते भक्तेष्टदा शारदा ॥१२॥

सच्चिन्मय्यनृसिंहदेशिकरवेर्बिम्बं पुनश्चोदगात्
श्रेयःपुञ्जमहापथश्च सुगमो बाभाति तद्यायिनाम् ।
तेजो राजति चान्द्रशेखरमिदं भाग्यं जनानां नवं
ब्रह्मानन्दमहोदधिर्विजयते विद्यामहाज्योत्स्नया॥१३॥

सच्चिन्मय्यनृसिंहदेशिकविधुः पूर्णः कलानां निधिः
शृङ्गाद्रौ सततोदितोऽङ्करहितो मोहान्धकारं नुदन् ।
छायां तत्त्वपथप्रदर्शिशुभवाक्छुभ्रामुदारां परां
स्वात्मानन्दसुधासमृद्धिमतुलां धृत्वाद्भुतं राजते १४॥

सच्चिन्मय्यनृसिंहमङ्गलगुरोर्मूर्तिः कृपा शाम्भवी
योगक्षेमविधायिधर्मसरणिः सिद्धिर्मनूनां ध्रुवा ।
नेत्रास्वाद्यसुधाझरी शुभकरी ब्राह्मी महःसंततिः
प्रत्यग्बोधनिरन्तरा सुखघना स्वाराज्यसिद्धिः परा १५

आस्त्रीबालं परगुरुकृपाकल्पवल्लीप्रसूतं
जग्ध्वा भक्ष्यं बहुरुचिभृतं भोज्यमानन्दसान्द्राः ।
भक्ता लब्ध्वा द्रविणनिचयं भूपतेः कर्णभावं
गायन्त्यम्बापरमकरुणां सद्गुरोश्चात्मभावम् ॥ १६ ॥

तुङ्गा शुद्धा वहति नितरामृष्यशृङ्गर्षिकीर्ति-
र्वाचां देवी लसति भगवत्पादशुद्धात्मविद्या ।
दुग्धे कामानमृतसुतनुः सद्गुरुः कामधेनुः
ज्ञानं रत्नं श्रुतिमयखनेर्भाति मूर्तं प्रसन्नम् ॥ १७ ॥

श्रीविद्यायाः प्रवहति दया स्वाद्यतोयेव तुङ्गा
गुर्वादेशः श्रुतिसुखहितोऽभ्यस्यते सद्द्विजाग्र्यैः ।
आस्ते धेनुः सकलसुखदा चन्द्रमौल्यंघ्रिसेवा
स्वात्मानन्दः स्वयमुदयते सत्यलोको नवोऽयम् ॥१८॥

श्रीमातास्ते सततसदया सत्कलादुग्धदोग्ध्री
लोकाचार्यो दिशति सुसुखं ज्ञानमानन्दसान्द्रम् ।
चातुर्वर्ग्यं फलति नितरामृश्यशृङ्गो महीध्रः
प्राहुश्चैवं मधुकररवैः सर्वतः शाखिनोऽमी ॥ १९ ॥

उच्चा यूयं भवत विनतास्तापनोदो भृशं स्यात्
इत्थं वृक्षाः फलभरनता मानवान् बोधयन्ति ।
गुर्वीसेवा जनयति शुभां वंशवृद्धिं मुदेति
श्रीशृङ्गाद्रिर्वदति मधुरैर्देवतावंशगीतैः ॥ २० ॥

धूली सूते श्रियमविकलां कौङ्कुमी शारदायाः
पादाम्भोजद्युतितिततिभृता संहतिः सत्कलानाम् ।
यां हृत्पद्मे शमदमपरा द्वादशात्मन्युदारा
धीरा देवीं विधृतकरणाः सर्वसिद्ध्यै भजन्ते ॥ २१ ॥

वाचां देव्याः सदसि विबुधप्राग्रणीर्भद्रमुद्रः
फुल्लाब्जाभां गुरुरधिवसन् भद्रपीठीममूल्याम् ।
देवीपादप्रसृतनखरद्योतमानांशुचित्रां
हैमीं नानारुचिभृतपटीं श्राणयन्भाति सद्भ्यः॥ २२ ॥

विद्याशङ्करयोगिराजभुवनाचार्यस्य विद्यागुरो-
र्विद्यारण्य इवाखिलश्रुतिवचोज्ञेयार्थरत्नाकरः ।
सच्चिन्मय्यनृसिंहविष्टपगुरोर्मुक्तस्य पूजालयं
निर्मायाखिलभव्यकल्पलतिकां स्वामिन् गुरो राजसे ॥

श्रीश्रीकण्ठबुधाग्रणीप्रियवचोयज्ञेश्वरप्राश्रित-
श्रीरामोत्तमपण्डितत्रयमिदं रत्नत्रयं भूतले ।
भाग्यं निर्मलचित्तनित्यसुहृदां निःसीमसौख्यप्रदं
संकल्पो जगतीगुरोः परिणतः श्लाघ्यः सदा राजते॥२४

आम्नायोक्तः प्रसरतु सदाचारधर्मः प्रजानां
श्रीविद्याथा विलसतु दया शास्त्रयाथात्म्यबोधे ।
श्रद्धा भक्तिर्गुरुचरणयोरस्तु सर्वार्थदात्री
विद्यां नित्यां रचयतु मुदं स्वात्मबोधस्वरूपाम् ॥२५

चन्द्रशेखरभारतीन्द्रगुरो भवत्पदसेवने
सक्तमेतमुदारयार्द्रदृशा भृशं स्ववलोकय ।
येन वेदशिरःपदोक्तमनन्यवेद्यमहः स्फुरेत्
पुत्रमित्रकलत्रवित्तसमस्तलोकसुखात्प्रियम् ॥ २६ ॥

भक्ते लोकगुरौ सदाशिवसमे सिद्धे जगन्मातरि
श्रीराज्ञ्यां गुरुचन्द्रशेखरयतेः संकल्पलक्ष्म्या अपि ।
श्रीकण्ठस्य सुधीश्वरस्य च धृतेः सर्वज्ञपीठस्य च
ख्यातेश्चापि समः समस्ति महितः कुम्भाभिषेकोत्सवः ॥

इति श्रीजगद्गुरुसच्चिदानन्दशिवाभिनव-
नृसिंहभारतीविजयाभिधं
काव्यं संपूर्णम् ॥

श्रीमीनाक्षी रक्षतु ।

---

श्रीबालमनोरमा प्रेस्, मैलापूर्, मद्रास्

## ॥ शुद्धाशुद्धसूची ॥

| पृष्ठम् | श्लोकः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ११ | वासं | वासः |
| ५ | २० | स्वाशिः | स्वाशीः |
| १५ | ७१ | प्रसुवां | प्रदुहां |
| १७ | ८१ | पिद्धातु | स दधातु |
| १९ | ९१ | कल्पे | कल्पो |
| ५३ | ५५ | अचीकशन् | अचीकसन् |
| ५४ | ६३ | सद्गुरुस्तमुप-<br>चचार सर्वथा | स प्रियैरुप-<br>चचार मङ्गलैः |
| ५७ | ७६ | आसरीसृपम् | अथासरीसृपम् |
| ,, | ७८ | जगाय | जगाम |
| ६८ | ६७ | थानार्घ्यं | थानार्घ्य |
| ७६ | १४ | तृणं | स्तृणं |
| ८९ | ७६ | मूर्धा | मूर्धा |
| ९० | ८१ | मधुरसुरभि | मधुसुरभि |
| १०५ | ७१ | झषोदये | तुलोदये |
| १११ | १०३ | कुशलवनामधारिणौ | शास्त्रसमृद्धि-<br>-शोभिनौ |
| १२२ | ३० | र्चाया | चार्या |
| १२३ | ३७ | वैराधि | वैरोधि |
| १२६ | ५० | श्रद्धाभक्ती | श्रद्धाभक्त्या |
| १३१ | ७६ | माचान्तु | मागन्तु |

| पृष्ठम् | श्लोकः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३५ | ९६ | श्रेयंःकामा | श्रेयस्कामा |
| १४१ | १९ | शुभंग्वो | शुभंग्वो |
| १४४ | ३३ | पुरावासि | पुरवासि |
| १४६ | ४४ | धेनुकं | धैनुकं |
| १४९ | ५६ | बर्हान् | बर्हं |
| १५२ | ७४ | भूपतय | भूपतये |
| १५९ | १६ | किरण | किरणं |
| ,, | १९ | राव | रवि |
| १६७ | ५८ | अवरुह्य | अवतीर्य |
| १७३ | ९ | भान्विता | भान्विताः |
| १७५ | १९ | र्धवाला | र्धवला |
| १७६ | २१ | श्रियं | श्रिये |
| १७९ | ३७ | सत्कृति | सत्कृतिः |
| १८० | ४४ | पर्यंच्छ्रियं | पर्यञ्श्रियं |
| १८१ | ४९ | गतेषणः | मतैषणः |
| १८६ | ७२ | तरं | तरत् |
| १८७ | ७९ | जननीं | जननी |
| १८९ | ८८ | चकार | बभूव |
| १९० | ९३ | लाजा | लाजान् |
| १९५ | १९ | भुवन | क्षिति |
| १९७ | ७ | मणिनिभा | मणिभा |
| १९८ | १० | यैः स्तुतिभिरपि | यैर्मुहुरपि |
| २०१ | २५ | विद्यां | विद्या |
| ,, | २७ | भक्के लोकगुरौ | भक्तेर्लोकगुरौ |